# ज़रा सी दूरदर्शिता, और ढेर सा प्यार...

## थोड़ी सी बचत से भी, 21 वर्ष की उम्र होने तक आपका बच्चा लखपति बन सकता है.



## यूनिट ट्रस्ट के बाल उपहार वृद्धि कोष में निवेश कीजिए.

आज आपका लाडला आपकी बाहों में खेल रहा है. सुरक्षित महसूस करने के लिए आपकी गोद ही उसके लिए काफी है. लेकिन पलक झपकते 'कल' आपके द्वार पर दस्तक देने लगेगा. उसे बाहर की दुनिया में कदम रखना पड़ेगा... ज़िंदगी की कठिन सच्चाइयों का सामना करना पड़ेगा.

तो अपने बच्चे का भविष्य संवारने के लिए आज ही कदम क्यों न उठाए जाएं? यूनिट ट्रस्ट के बाल उपहार वृद्धि कोष में निवेश कीजिए. इस योजना के अंतर्गत एक निश्चित अवधि में थोड़ा पैसा लगाने से 21 वर्ष की उम्र होने पर आपका बच्चा लखपति हो जाएगा.

प्र. अपने बच्चे को लखपति बनाने के लिए निवेश कैसे किया जाए?

उ. अगर बच्चे का जन्म होते ही आप बाल उपहार वृद्धि निधि में निवेश करें तो आपके सामने कई विकल्प हैं. (i) बच्चे के जन्म पर रु. 1100 भरें और 15 साल तक प्रतिवर्ष भरते रहें (ii) आप 3 सालों तक लगातार रु. 3,200 प्रतिवर्ष निवेश कर सकते हैं या लगातार 6 सालों तक रु. 1,900/- प्रतिवर्ष का निवेश कर सकते हैं (iii) या आप एक बार में ही रु. 8,500/- की पूंजी लगा सकते हैं.

प्र. यदि बच्चा बड़ा हो तो?

उ. 15 वर्ष की उम्र तक के लिए अलग-अलग योजना हैं. बाल उपहार वृद्धि कोष की जानकारी पुस्तिका में दी गई तालिका से इसकी विस्तृत जानकारी हासिल की जा सकती है. जानकारी पुस्तिका के लिए हमें लिखिए.

प्र. बच्चों को ये उपहार कौन कौन दे सकता है?

उ. माता-पिता, संबंधी, मित्र, कंपनी या व्यावसायिक संस्थाएं.

प्र. निवेश की न्यूनतम राशि क्या है?

उ. रु. 500/- तथा उसके बाद रु. 100 के गुणकों में.

प्र. इस निवेश पर लाभ कितना होता है?

उ. प्रतिवर्ष 12.5% तथा हर पाँचवें वर्ष बोनस डिवीडेंड भी.

प्र. अवधि पूर्ण होने पर भी कोई सुविधा मिलती है?

उ. रकम निकालने की बजाय बच्चा इसे यूनिट ट्रस्ट की अन्य योजनाओं में से किसी में भी निवेशित कर सकता है.

सी जी जी एफ की मुफ्त जानकारी पुस्तिका के लिए किसी भी यूनिट ट्रस्ट ऑफिस या मुख्य प्रतिनिधि या एजेंट अथवा चुने हुए हिन्दुस्तान पेट्रोलियम या इंडियन आयल पेट्रोल पंपों से संपर्क कीजिए. या हमारे किसी भी कार्यालय को लिखिए.

या इस कूपन को भरकर डाक द्वारा यूनिट ट्रस्ट के किसी भी कार्यालय को भेज दीजिए.

कृपया मुझे बाल उपहार वृद्धि कोष की मुफ्त जानकारी भेजिए.

नाम : ____________________

पता : ____________________



**भारतीय यूनिट ट्रस्ट**

(सार्वजनिक क्षेत्र की वित्तीय संस्था)

- 13 सर विट्ठलदास ठाकरसी मार्ग (न्यू मरीन लाइन्स), बंबई 400 020. फोन : 2863767/6201995.
- जस्टिस बशीर अहमद सैयद बिल्डिंग, 45, सेकेंड लाइन बीच, मद्रास- 600 001. फोन : 587433/580938.
- गुलाब भवन (पिछला ब्लॉक), २री मंज़िल, 6, बहादुर शाह ज़फर मार्ग, नई दिल्ली- 110 002. फोन : 3318638/3319786.
- 2 एंड 4 फेयरलाइ प्लेस, कलकत्ता- 700 001. फोन : 209391, 205322.

Sista's-UTI-29/90 HIN G

# RAMBO IV



No more evil, injustice and crime will be tolerated in this city. The relentless crusader is here. With his famed Zap Gun (the three sound gizmo that's the terror of the underworld) and his fleet of rough 'n tough ready-for-action vehicles — Wrecker, Super Dumper and Fire Engine. And of course, his missile-firing Helicopter. So...breathe easy. The one man army is here.

**SAMMO**

Mechanical and electronic toys









**CHANDAMAMA TOYTRONIX**

**in collaboration with Sammo Corporation, S.Korea**

Chandamama Toytronix Private Limited, Chandamama Buildings, 188, NSK Salai, Vadapalani, Madras 600 026

Mudra:M CTPL:4093

**जिज्ञासा –**

# पितरौ, चतुर्थीसमासः इत्यादीनि

शिष्यः- श्रीमन्, 'माता च पिता च – पितरौ' एतेत्यत् कस्य समासस्य उदाहरणम्?

आचार्यः- न कस्यापि समासस्य उदाहरणं तत्।

शि - द्वन्द्वसमासस्य उदाहरणं न वा तत्?

आ - न इति वदामि खलु? विग्रहवाक्यदर्शनात् द्वन्द्वसमासस्य भानं यद्यपि भवति, तथापि तत्र न द्वन्द्वसमासः, न समासान्तरं वा। तत्र न समासवृत्तिः, अपि तु एकशेषवृत्तिः। वृत्तयः कति, काश्च ताः इति भवान् जानाति एव खलु?

शि - आं, जानामि। कृत्-तद्धित-समासैकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तयः।

आ - एकैकस्याः अपि वृत्तेः उदाहरणं वदतु तावत्।

शि - पचति इति पाचकः इत्येतत् कृद्वृत्तेः उदाहरणम्।
दशरथस्य अपत्यं पुमान् दाशरथिः इत्येतत् तद्धितवृत्तेः उदाहरणम्।
राज्ञः पुरुषः राजपुरुषः इत्येतत् समासवृत्तेः उदाहरणम्।
पठितुम् इच्छति पिपठिषति, पठन्तं प्रेरयति पाठयति, इत्यादीनि सनाद्यन्तधातुवृत्तेः उदाहरणानि।
एकशेषवृत्तेः तु ....

आ - माता च पिता च पितरौ* इत्येतत् उदाहरणम्।

शि - प्राथमिकस्तरे मां यः पाठितवान् सः अध्यापकः पितरौ इत्येतत् द्वन्द्वसमासस्य उदाहरणम् इति पाठितवान् खलु?

---

* पिता मात्रा – (१-२-७०)

आ - भ्रमवशात् केचन तथा वदन्ति। पितरौ, भ्रातरौ, रामाः, इत्यादीनि एकशेषवृत्तेः एव उदाहरणानि।

शि - 'पितरौ' इत्येतत् द्वन्द्वसमासस्य उदाहरणम् इति बोधयन्तः किम् एकशेषवृत्तिं न जानन्ति इति?

आ - तथा न। पितरौ इत्यस्य विग्रहवाक्ये पदद्वयं श्रूयते। द्वन्द्वसमासे अपि एवम् एव। अतः ते भ्रान्त्या तत्र द्वन्द्वसमासं वदन्ति। अथवा एकशेषवृत्तिं समासवृत्त्यभिन्नां भावितवन्तः स्युः अपि।

शि - श्रीमन्, 'अध्ययनार्थं पुस्तकम् – अध्ययनपुस्तकम्' इत्येवमादिरूपेण कुतो वा समासः न करणीयः?

आ - विधायकस्य सूत्रस्य अभावात् अत्र चतुर्थीसमासः न क्रियते।

शि - अर्थानुगुणं विग्रहवाक्यं प्रदर्शितम्। तथापि एवं न करणीयम् इति.....

आ - समासकरणार्थं विधायकं सूत्रम् आवश्यकं खलु? चतुर्थीसमासः तु– 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' (२-१-३६) इति सूत्रेण। तदर्थपदेन प्रकृतिविकृतिभावः इष्यते। भवता उक्ते उदाहरणे तत् नास्ति।

शि - प्रकृतिविकृतिभावो नाम?

आ - कुण्डलाय हिरण्यम् इति तदुदाहरणम्। कुण्डलं हिरण्यस्य विकृतिः। तन्नाम कुण्डलम् (आभरणविशेषः) हिरण्यात् (सुवर्णात्) न अन्यत्। हिरण्यम् एव कुण्डलरूपेण भवति। कुण्डलं हिरण्यस्य रूपान्तरम्। एतादृशे सन्दर्भे एव तादर्थ्यचतुर्थी, नान्यत्र।

शि - तर्हि अध्ययनपुस्तकम् इत्यादिषु कः समासः वक्तव्यः?

आ - षष्टीतत्पुरुषसमासः उच्यते। अध्ययनस्य पुस्तकम् इति विग्रहः। द्वितीया-तृतीयादितत्पुरुषाः अपि एवम् एव। यत्र सूत्रेण विधानं तत्रैव ते वक्तव्याः। यथा स्फुरति तथा वक्तुं न शक्नुमः।

* * * *

# चन्दमामा

सस्थापकः – 'चक्रपाणिः' सञ्चालकः – 'नागिरेड्डी'

अस्मदीया प्राचीना संस्कृतिः महोन्नता एव। विज्ञानक्षेत्रे देशे प्रगतिः दृश्यते। तान्त्रिकतायाः अभावः अपि नास्ति। अस्मद्देशीयाः विज्ञानिनः बहवः अन्ताराष्ट्रियस्तरे स्वनैपुण्यं पाण्डित्यातिशयं च प्रदर्शितवन्तः सन्ति।

अस्माकं न्यायक्षेत्रस्य मूलं सूत्रं सर्वसमानता। सर्वेषां अपि समानः अधिकारः अत्र। प्राकृतिकी सम्पत्तिः अपि देशे न न्यूना। बह्व्यः जीवनद्यः वहन्ति। समृद्धिदायकानि कृषिक्षेत्राणि, खनिजसम्पत्तिः च पर्याप्तमात्रेण सन्ति।

एवं स्थितेऽपि अस्माकं राष्ट्रियं जीवनं तृप्तिदायकं तु नास्ति। स्वातन्त्र्यप्राप्त्यनन्तरं चत्वारि दशकानि अतीतानि चेदपि अपेक्षिता प्रगतिः तु न साधिता अस्माभिः। किं कारणम् एतस्य? देशे दिने दिने हिंसाप्रवृत्तिः वर्धमाना दृश्यते। एवं तर्हि लोपः कुत्र?

अस्माकम् असाफल्यस्य प्रधानं कारणम् अस्ति- स्वार्थपरता। विविधैः स्वार्थैः आक्रान्ताः स्मः वयम्। वैयक्तिकी, मतीया, साम्प्रदायिकी, व्यावसायिकी च स्वार्थभावना अस्मान् सदा बाधते। प्रामाणिकता कोषे, दिवङ्गतेषु वा श्रूयते, न तु कस्यापि व्यवहारे दृश्यते! एवं व्यवहरन्तः वयं देशं, समाजं, परिवारम् आत्मानं च वञ्चयन्तः स्मः। यावत् वयम् आत्मनः परिष्कारविषये न चिन्तयामः तावत् देशस्य प्रगतिः न भविष्यति।

सम्पुटः – ७ नवम्बर् – १९९० सञ्चिका – ८

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






# फिजीदेशे भारतीयानां दुःस्थितिः




१६४३ तमे वर्षे प्राकाश्यं गतः, फेसिफिक्सागरस्य नैर्ऋत्यदिशि स्थितः, ८०० द्वीपानां समूहः एव फिजीदेशः इति कथ्यते। १८७४ तमे वर्षे फिजीदेशः आंग्लानाम् अधीनः जातः आसीत्। १८,३७६ चतुरस्रं कि.मी. विस्तारयुक्ते एतस्मिन् देशे सार्धसप्तलक्षं जनाः निवसन्ति। 'सुवा' नगरम् एतस्य राजधानी।

१९ शतकस्य अन्तिमे दशकद्वये इक्षुक्षेत्रेषु कार्यं कर्तुं भारतदेशात् सहस्रशः जनाः फिजीद्वीपान् गतवन्तः। कालान्तरे ते तत्रैव स्थिराः जाताः। फिजीदेशस्य आर्थिकोन्नत्यर्थं सांस्कृतिकप्रगत्यर्थं च भारतीयवंशजैः विशेषतः सहयोगः कृतः।

१९७० तमे वर्षे फिजीदेशः स्वतन्त्रः जातः। इदानीं तत्र ५०% जनाः भावतीयमूलाः एव। मूलनिवासिनां सङ्ख्या ४७%। ३% युरोपियन्जनाः चैनादेशीयाः च तत्र सन्ति। एतस्य तात्पर्यं यत् फिजीदेशे भारतीयमूलाः जनाः एव अधिकसङ्ख्याकाः।

प्रजाप्रभुत्वपद्धत्यनुसारं प्रवृत्ते निर्वाचने भारतीयमूलः डा।। तिमोसि बवाद्रवर्यः निर्वाचितः सन् फिजीदेशस्य प्रधानमन्त्री जातः। किन्तु सेनाध्यक्षः सिटिवेनी रबूकः बवाद्रवर्यस्य मन्त्रिमण्डलं पातयित्वा स्वयम् अधिकारसूत्रं गृहीतवान्। फिजीदेशे स्वजातीयानां मलेषियन्जनानाम् एव आधिक्यं स्यात् इति इच्छति सः। इदानीं सः

निर्वाचनेषु जयं प्राप्य प्रधानमन्त्रित्वं प्राप्तव्यम् इति प्रयतमानः अस्ति। स्वयोजनायाः साफल्यतां सम्पादयितुं सः सांविधानिकानाम् अंशानां परिवर्तनं कृतवान्। नूतनाः नियमाः तेन आनीताः। एतदनुगुणं, भारतीयमूलाः जनाः अधिकसङ्ख्याकाः सन्तः अपि शासनप्रमुखत्वं प्राप्तुं नार्हन्ति।

एषु दिनेषु समग्रे प्रपञ्चे जातिभेदस्य निवारणार्थं प्रयत्नाः प्रचलन्ति। यैः जातिभेदः वर्णभेदः वा पाल्यते ते अनागरिकशब्देन उच्यन्ते। एतादृशे कालखण्डे, रबूकः जातिभेदं जागरयन् कार्यप्रवृत्तः दृश्यते। एतस्य कारणतः फिजीदेशीयाः भारतीयमूलाः जनाः विविधान् क्लेशान् अनुभवन्तः सन्ति।

फिजीदेशीयः राष्ट्रियः आयः यात्रास्थलानि, इक्षुसम्पत्तिं च आधारीकृत्य तिष्ठति। इदानीं तु तत्र आयमूलयोः एतयोः उभयोः अपि क्षतिः जाता दृश्यते। रबूकस्य आशयः यदि सफलः स्यात् तर्हि फिजीदेशे प्रजाप्रभुत्वम् अवसानं प्राप्नुयात्। आर्थिकदुःस्थितेः कारणतः दारिद्र्यकूपे पततः एतस्य निस्तेजस्कता अपि अपरिहार्या भवेत्।






# स्नुषायाः कष्टम्

रविचन्द्रः नगरे सर्वकारीये उद्योगे अस्ति। कदाचित् सः मित्रस्य विवाहार्थं तदीयं गृहं दिनद्वयात् पूर्वम् एव गतवान्। तत्र तेन स्वातिः नाम सुन्दरी युवतिः दृष्टा। तस्याः सौन्दर्येण क्रियाशीलतया, विनययुक्तव्यवहारेण च रविचन्द्रः नितराम् आकृष्टः। एषा एव परिणेतव्या इति निश्चितवान् रविचन्द्रः।

स्वात्याः मातापितरौ निर्धनौ। रविचन्द्रः तौ दृष्ट्वा उक्तवान्– "अहं नगरे सर्वकारीये उद्योगे अस्मि। मम पिता दिवङ्गतः अस्ति। गृहे माता एका एव। वरदक्षिणा स्वीकरणीया इति मातुः तीव्रा इच्छा। अहं भवतोः पुत्रीं परिणेतुम् इच्छामि। एतं विचारं यदि मम माता जानीयात् तर्हि विघ्नम् उत्पादयेत्। अतः यदि भवतोः आक्षेपः न स्यात् तर्हि मित्रस्य विवाहस्य दिने एव ममापि विवाहः भवतु इति मम विचारः। विवाहानन्तरं मातुः समाधानम् अहं करिष्यामि" इति।

रविचन्द्राय पुत्रीं दातुं सिद्धौ जातौ स्वात्याः मातापितरौ। स्वातिः अपि अङ्गीकारं प्रदर्शितवती। अतः स्नेहितस्य विवाहदिने एव स्वाति-रविचन्द्रयोः विवाहः अपि प्रवृत्तः।

रविचन्द्रः पत्न्या सह गृहं गतवान्। एतत् दृष्ट्वा तस्य माता दुर्गाम्बा आश्चर्यचकिता जाता। रविचन्द्रः गृहस्य अन्तः गत्वा मातरं सर्वं निवेदितवान्। तदा दुर्गाम्बा स्नुषां सम्प्रदायपूर्वकं स्वागतीकृत्य– "वत्से! दक्षिणपादं प्रथमं स्थापयन्ती अन्तः आगत्य गृहस्य सम्पत्तिं वर्धयतु" इति वात्सल्येन उक्तवती। एतादृशं वात्सल्यपूर्णं वचनं श्रुत्वा स्वातिः नितरां सन्तुष्टा।

रात्रौ भोजनस्य अनन्तरं रविचन्द्रः मातरं निवेदितवान्– "स्नुषा वरदक्षिणया



आभरणैः च सह न आगता इति चिन्तां मा करोतु। एषा भवत्याः सर्वेषु कार्येषु महकुर्वती योग्येन क्रमेण कुटुम्बं निर्वक्ष्यति। भवत्याः काऽपि चिन्ता यथा न स्यात् तथा व्यवहरिष्यति च'' इति।

अनन्तरदिने प्रातः रविचन्द्रः कार्यालयं गतः। तदा जलम् आनेतुं प्रस्थितां स्नुषां कोपेन उक्तवती दुर्गाम्बा— ''अये मायाविनि, सर्वकारीयोद्योगे स्थितं मम पुत्रं हावभावैः वशीकृतवती खलु? तत्रापि रिक्तहस्ततया आगता! एतत्सर्वं कुर्वती भवती लज्जां न अनुभवति वा?'' इति।

श्वश्र्वाः स्वभावे अकस्मात् जातं परिवर्तनं दृष्ट्वा आश्चर्यम् अनुभवन्ती स्वातिः— ''मया किमपि न कृतम् अम्ब! भवत्याः पुत्रः एव मम मातापितरौ विवाहविषये प्रार्थितवान्। मया अङ्गीकारः दत्तः। विवाहात् पूर्वम् एतस्य परिचयः सर्वथा न आसीत् मम'' इति उक्तवती।

''एवं वा वस्तुस्थितिः? अस्तु तावत्, मम पुत्रः भवत्याः रूपेण वशीकृतः सन् भवतीं परिणीतवान्। रिक्तहस्तां भवतीं पतिगृहं प्रेषयतः भवत्याः पितुः विवेकः कथं नष्टः? समीपग्रामवासी रामनाथः मम पुत्रस्य सौन्दर्यम् उद्योगं च दृष्ट्वा लक्षरूप्यकात्मिकया वरदक्षिणया सह पुत्रीं दातुं सिद्धः आसीत्। अत्रान्तरे शनिः इव भवती मम गृहं प्रविष्टा। मम स्वप्नाः भग्नाः। अत्र गृहे यद्यत् प्रवर्तते तत्सर्वं यदि भवती पतिं निवेदयेत् तर्हि भवत्या कष्टम् अनुभोक्तव्यं स्यात्। जागरूका भवतु'' इति उक्तवती दुर्गाम्बा।

एवं पुत्रस्य कार्यालयगमनस्य अनन्तरं प्रतिदिनम् अपि दुर्गाम्बायाः पीडायाः आरम्भः। पुत्रस्य निर्गमनस्य अनन्तरं कर्मकरीं गृहं प्रेषयति सा। पात्र-वस्त्र-क्षालनादिकं स्वात्या एव करणीयम्। सम्मार्जनादिकं द्विवारं कारयति दुर्गाम्बा। कार्येषु पदे पदे दोषदर्शनं तर्जनं च भवति एव।

सायं यदा पुत्रः प्रत्यागच्छति तदा दुर्गाम्बा स्नुषाविषये कृत्रिमां प्रीतिं प्रदर्शयन्ती पुत्रं वदति— ''भोः, भवतः पत्नी मध्याह्ने सम्यक्

न भुक्तवती एव। स्नुषा यदि कृशा भवेत् तर्हि मया अपवादः श्रोतव्यः भवेत्'' इति।

मध्याह्ने आकण्ठं भुक्त्वा सुखेन उपविश्य व्यजनेन वीजनार्थं स्नुषाम् आदिश्य स्वगतम् उच्चैः वदति दुर्गाम्बा– ''यदि रामनाथस्य पुत्री मम स्नुषा अभविष्यत् तर्हि सा धनेन आभरणैः गोभिः च सह आगमिष्यत्। अहं च महाराज्ञी अभविष्यम्। सर्वं मम दौर्भाग्यफलम्। दारिद्र्यदेव्याः पुत्रीं गृहम् आनीय मम पुत्रः मम उदरे अग्निं ज्वालितवान्। किं करोमि अहम्?'' इति। एतत्सर्वं श्रुत्वा स्वातिः खेदेन नितरां सन्तप्ता भवति।

कदाचित् रविचन्द्रः कार्यालयकार्यस्य निमित्तं अन्यत् नगरं गतवान्। तस्मिन् एव दिने सायं स्वातिः ज्वरपीडिता अभवत्। अनन्तरदिने दुर्गाम्बा स्नुषां ज्वरपीडिताम् अपि अविगणय्य दूरबन्धोः विवाहार्थं समीपग्रामं प्रति प्रस्थिता। प्रस्थानसमये सा स्नुषाम् उक्तवती– ''लङ्घनं परमौषधम् इति श्रूयते। अतः अद्य उपवासम् आचरतु। किञ्चित् जलं पीत्वा सर्वाणि द्वाराणि पिधाय शयनं करोतु। श्वः मध्याह्नाभ्यन्तरे अहम् आगमिष्यामि'' इति।

तस्मिन् दिने रात्रौ जलं पीत्वा स्वातिः द्वार पिधाय शयनं कृतवती। रात्रौ महती वृष्टिः अनिरीक्षिततया आगता। स्वातिः सम्यक् आच्छाद्य सुप्ता अपि ज्वरेण कम्पते स्म।



मध्यरात्रसमये तया द्वारताडनशब्दः श्रुतः। कम्पमाना एव उत्थाय गत्वा सा द्वारम् उद्घाटितवती।

वृष्ट्या सम्पूर्णतया आर्द्रा काचित् तरुणी हस्ते एकां पेटिकां धृत्वा द्वारस्य पुरतः स्थिता आसीत्। सा अन्तः आगच्छन्ती उक्तवती– ''अहो वृष्टिः, मध्यरात्रे उत्थाप्य पीडा दत्ता इति मा चिन्तयतु भवती। मम नाम विजया इति। सख्याः विवाहार्थं गत्वा प्रत्यागमनसमये महती वृष्टिः आगता। शकटस्य चक्रं पङ्के निमग्नम्। महता प्रयत्नेन अपि शाकटिकः पङ्कात् शकटम् उन्नेतुं न शक्तवान्। अग्रे गमनम् अशक्यम् इति मत्त्वा रात्रियापनार्थम् अहम् अत्र आगता। प्रातःकालं यावत् वसत्यर्थम्



अनुमतिः दत्ता चेत् उपकृता भवेयम्। प्रातः अहम् इतः निर्गमिष्यामि" इति।

स्वातिः समीपस्थं मञ्चं प्रदर्श्य– "भवत्याः अत्र स्थित्या मम कोऽपि क्लेशः नास्ति। ह्यः आरभ्य मम ज्वरः। अतः भवतीं सत्कर्तुं न शक्नोमि। आर्द्रं वस्त्रं परिवर्त्य अत्र मञ्चे शयनं करोतु" इति कम्पमानस्वरेण उक्तवती।

विजया स्वात्याः हस्तं गृहीत्वा पीरक्ष्य– "सत्यं खलु? ज्वरः तीव्रः एव दृश्यते। भवती प्रथमं शयनं करोतु" इति उक्त्वा तां तस्याः शयने शाययित्वा आर्द्रवस्त्रं परिवर्त्य मञ्चे सुप्तवती।

सूर्योदयसमये स्वातिः उत्थितवती। ततः पूर्वम् एव विजया उत्थाय गमनार्थं सन्नाहं कुर्वती आसीत्। उत्थिता स्वातिः– "इतः अल्पे एव काले श्वश्रूः आगच्छेत्। तदभ्यन्तरे पाकः समापनीयः" इति स्वगतं वदन्ती पाकशालां प्रति प्रस्थितवती।

विजया तां ततः निवारयन्ती– "भवती शयनं करोतु तावत्। भवती का इति न जानामि। किन्तु ज्वरतापकारणतः भवती किमपि किमपि उक्तवती। तत्सर्वं शृण्वत्या मया भवत्याः गृहस्य स्थितिः ज्ञाता। श्वश्रूः भवतीं बहुधा पीडयन्ती अस्ति खलु?" इति पृष्टवती।

शिरः अवनमय्य स्थिता स्वातिः क्षणकालस्य मौनस्य अनन्तरम्– "किं गोपनेन? मम श्वश्रूः वरदक्षिणाम् इच्छति स्म। मम विवाहात् पूर्वं रामनाथः नाम धनिकः प्रभूतां वरदक्षिणां सुवर्णाभरणानि च दातुं सिद्धः आसीत् इति श्रूयते। तादृशः अवकाशः नष्टः इत्यतः श्वश्रूः मां पदे पदे पीडयति" इति उक्तवती।

"एवं वा वस्तुस्थितिः? तर्हि तस्याः आगमनपर्यन्तम् अहं स्थास्यामि। 'मम सखी एषा' इति मां परिचाययतु भवती। अनन्तरम् अहं यदुचितं तत् करिष्यामि" इति उक्तवती विजया।

पुनः अल्पे एव काले दुर्गाम्बा गृहम् आगता। गृहस्य अन्तः बहुभिः आभरणैः युक्तां तरुणीं दृष्ट्वा आश्चर्येण– "का भवती?" इति पृष्टवती सा।

"अहं भवत्याः स्नुषायाः स्वात्याः बाल्यसखी। सख्याः विवाहं समाप्य प्रतिगमनसमये वृष्ट्या पीडिता अहं रात्रौ अत्र आगता" इति उक्तवती विजया।

दुर्गाम्बा विजयायाः कण्ठाभरणानि पीरक्षादृष्ट्या दृष्टवती। तत्र तया मङ्गलसूत्रं न दृष्टम्। 'एवं तर्हि एषा अविवाहिता तरुणी। यदि धनिककुलोत्पन्ना एतादृशी मम स्नुषा अभविष्यत् तर्हि वरम् अभविष्यत्' इति आलोचितवती सा विजयाम् उक्तवती— "भवती तु महालक्ष्मीः इव दृश्यते। मम स्नुषा दृष्टा खलु भवत्या? रूपं तु अपूर्वं, किन्तु किं तेन?" इति।

एतत् श्रुत्वा हसन्ती विजया— "ह्यः रात्रौ दीर्घकालं यावत् आवां वार्तालापं कृतवत्यौ। सौभाग्यवशात् स्वात्या भवादृशी गुणवती श्वश्रूः लब्धा" इति उक्तवती।

एतया प्रशंसया सन्तुष्टा दुर्गाम्बा— "श्वश्र्वाः गुणवत्त्वम् एतस्मिन् काले का वा स्नुषा वदेत्? स्वातिः मां कठोरहृदयाम् उक्तवती स्यात्" इति उक्तवती।

"किं वदति भवती? स्वात्या भवत्याः गुणाः बहुधा श्लाघिताः। रामपुरे रामनाथः नाम मम कश्चन बन्धुः अस्ति। तस्य पुत्र्याः विवाहः सद्यः जातः। तस्याः श्वश्रूः निन्दनशीला इति श्रूयते। गृहकार्ये किञ्चित् अपि साहाय्यम् अकुर्वती सा विना कारणं स्नुषां निन्दन्ती भवति स्म। अतः मम सख्या



उपायः कृतः। मासात्पूर्वं सा श्वश्र्वाः पीडातः मुक्ता जाता" इति उक्तवती विजया।

"किं कृतं तया? श्वश्रूः गृहात् निष्कासिता, उत पत्या सह अन्यत्र निवासः कृतः?" इति कुतूहलेन पृष्टवती दुर्गाम्बा।

"तदुभयम् अपि न कृतम्। श्वश्रूं घोरं विषं भोजितवती सा। हन्त! श्वश्रूः परलोकं गता!" इति उक्तवती विजया।

"कीदृशं दारुणं कृत्यम्! देवो दयालुः! धनाशया अहं ताम् एव स्नुषात्वेन आनेतुं प्रयत्नं कृतवती आसम्। सौभाग्यवशात् मम प्रयत्नः न सफलः" इति म्लानवदना दुर्गाम्बा उक्तवती।

"यदि सा रामनाथपुत्री भवत्या स्नुषात्वेन आनीता स्यात् तर्हि भवत्या एतावता परलोके

स्थातव्यम् अभविष्यत्। सुन्दरी सुशीला च स्नुषा प्राप्ता भवत्या। तया अपि भवादृशी गुणवती श्वश्रूः प्राप्ता। अस्तु तावत्, विलम्बः जातः। अहं गमिष्यामि" इति उक्त्वा पेटिकया सह ततः निर्गतवती विजया।

एतावन्ति दिनानि स्नुषा पीडिता यत् तदर्थं पश्चात्तापम् अनुभूतवती दुर्गाम्बा। धनतः अपि सौशील्यं प्रधानम् इति अवगतम् आसीत् तया। अतः तस्याः स्वभावे महत् परिवर्तनम् आगतम्।

पुनः केषाञ्चित् दिनानाम् अनन्तरं, कदाचित् दुर्गाम्बा मध्याह्ने सुप्तवती आसीत्। तावता गृहस्य पुरतः कश्चन शकटः आगत्य स्थितः। स्वातिः कुतूहलेन बहिः आगत्य दृष्टवती। शकटात् विजया अवतरन्ती अस्ति!

सन्तोषातिरेकेण स्वातिः ताम् आदरेण अन्तः नीतवती। दुर्गाम्बां निद्रामग्नां ज्ञात्वा विजया मन्दस्वरेण स्वातिं पृष्टवती– "भवत्याः श्वश्र्वाः स्वभावे किमपि परिवर्तनं दृश्यते वा?" इति।

"परिवर्तनं तु महत्। इदानीं सा मां पुत्रीम् इव प्रीत्या पश्यति। भवत्या इन्द्रजालम् एव कृतम् इव। किन्तु तस्मिन् दिने भवती रामनाथपुत्र्याः विषये मिथ्यापवादम् आरोपितवती यत् तेन अहं नितरां खिन्ना" इति उक्तवती स्वातिः।

तदा विजया हसन्ती– "भोः, भवती खेदं मा अनुभवतु। भवत्या प्राप्यमाणं सुखं दृष्ट्वा सा नितरां सन्तुष्टा अस्ति। यतः रामनाथस्य पुत्री न अन्या, अपि तु अहम् एव" इति उक्तवती।

"एवं वा! चतुरा भवती ...." इति किमपि वदन्त्याः स्वात्याः वचनम् अर्धे स्थगयित्वा– "एतत् रहस्यं कुत्रापि मा प्रकटयतु। अहम् इदानीं मातुलगृहं गच्छन्ती अस्मि। प्रतिगमनसमये सप्ताहं यावत् भवत्याः गृहे मम वासः" इति उक्त्वा शकटम् आरूढवती विजया।






# १३

(वसन्तस्य नेतृत्वे वीरसिंहं विरुध्य कार्यं कुर्वतां युवकानां मेलनं प्रति गतः राजा शान्तिदेवः शत्रूणाम् आक्रमणकारणतः तीव्रं व्रणितः। वसन्तः वीरसिंहसेनापतिं कपालकण्ठं मारितवान्। जयानन्दमुनेः आश्रमे वर्धमानस्य युवराजस्य वार्तां वसन्तं विस्तरेण निवेद्य राजा शान्तिदेवः गतप्राणः जातः। तदनन्तरम्......।)

राज्ञः शान्तिदेवस्य चिरवियोगात् वसन्तः दुःखितः अस्ति। किन्तु युवराजः सकुशलं जीवति इति ज्ञातवतः तस्य सन्तोषः अपि। एवम् उभयभावेन आकुलः वसन्तः राज्ञः मार्गदर्शनं स्मरन् जयानन्दमुनेः आश्रमं गत्वा मुनिं जयानन्दं युवराजं सन्दीपकुमारं च प्रवृत्तं समग्रं निवेदितवान्।

राज्ञ्याः स्मारकं यत्र आसीत् तस्य पार्श्वे एव महाराजस्य स्मारकम् अपि कल्पितम्।

एतत्कार्यव्याजेन आरब्धः सन्दीप-वसन्तयोः स्नेहः अल्पे एव काले गाढताम् आपन्नः। तयोः मैत्रीं दृष्ट्वा जयानन्दमुनिः अपि सन्तोषम् अनुभवति।

सन्दीपः वसन्तः च अरण्ये सञ्चरन्तौ वृक्षस्य अधः उपविशन्तौ वा बहून् विषयान् अधिकृत्य वार्तालापं कुरुतः। यद्यपि वार्तालापमध्ये बहवो विषयाः भवन्ति तथापि शौर्यप्रधानानां विषयाणाम् एव बाहुल्यं तत्र।



उभौ अपि तरुणौ बलशालिनौ इत्यतः एतत् सहजम् एव। सम्भाषणलीनः वसन्तः वीरसिंहस्य बहून् व्यवहारान् सोदाहरणं निवेदयति।

वीरसिंहेन क्रियमाणं दुष्टं शासनं वसन्तस्य मुखात् विस्तरेण शृणोति सन्दीपः। तत् श्रुतवंतः तस्य रक्तम् अपि तप्तं भवति। "भवतां गणम् अहम् अपि प्रविशामि। भवतां कार्ये यथाशक्ति सहकरोमि च" इति वसन्तं वदति सः।

किन्तु एतत् निराकुर्वन् वदति वसन्तः– "युवराज! अस्माकम् आशाकेन्द्रम् अस्ति भवान्। अतः भवतः रक्षणविषये विशेषजागरूकता आश्रयणीया अस्ति अस्माभिः। अन्यच्च वीरसिंहं सिंहासनात् पातयितुम् अस्माकं शक्तिः पर्याप्ता। तदर्थं भवतः प्रयत्नः अनावश्यकः। भवान् पृष्ठभूमौ तिष्ठन् सर्वेषु प्रेरणां पूरयतु। तावता अलम्" इति।

युवराजः सन्दीपकुमारः अरण्ये एकाकी सञ्चरति। सदा क्रियाशीलः सः। कार्यं विना क्षणम् अपि स्थातुं न अर्हति सः। बाणप्रयोगे खड्गचालने च तेन असदृशं प्रावीण्यं प्राप्तम् आसीत्। आकारेण सः पितरम् एव अनुकरोति स्म। भव्या गम्भीरा दर्शनीया च आकृतिः तस्य।

इदानीं सुमेधराज्यस्य जनजीवनं नितरां शोचनीयतां गतम् आसीत्। सामान्याः एकं क्षणम् अपि निश्चिन्तं स्थातुं न अर्हन्ति। वणिजः कृषकान् च राजभटाः सदा पीडयन्ति स्म। येषां विषये सन्देहः तेषाम् अङ्गानि कर्तितानि भवन्ति स्म।

कदाचित् वीरसिंहः नूतनं सेनापतिं सर्वदमनम् आहूय उक्तवान्– "ये राजविरोधम् आचरन्ति ते निर्दयं मारणीयाः। तेषां प्रयत्नः समूलम् उन्मूलनीयः। तेषां रहस्यकेन्द्रम् अरण्यं खलु? अतः अरण्यं शोधनीयम् अस्माभिः। मृगाणाम् इव एतेषाम् अपि ग्रहणं मारणं च करणीयम्" इति।

"यथाज्ञापयति भवान्। सेनाम् अद्यैव अरण्याभिमुखीं करिष्यामि" इति महता

उत्साहेन उक्तवान् सर्वदमनः।

"सेनायाः नायकत्वम् अहम् एव निर्वहामि" इति उक्तवान् वीरसिंहः।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् सर्वदमनः उक्तवान्– "प्रभो, कस्यचित् राज्यस्य उपरि आक्रमणं यदा भविष्यति तदा भवतः नायकत्वं शोभते। इदानीं तु केषाञ्चित् उद्धतानां निग्रहणार्थम् अरण्यं प्रति गम्यते। एतादृशे सन्दर्भे महाराजस्य भवतः नायकत्वं न शोभते इति मम आशयः। अतः एतद्विषये पुनः किञ्चित् चिन्तयतु कृपया" इति।

क्षणकालस्य चिन्तनस्य अनन्तरं वीरसिंहः उक्तवान्– "सर्वदमन, भवता युक्तम् एव उक्तम्। अतः अहं प्रकटरूपेण युद्धार्थं न गच्छामि। मृगयाव्याजेन कैश्चित् सैनिकैः सह अरण्यं गमिष्यामि। मम अरण्यप्राप्तितः पूर्वं सैनिकाः अर्धचन्द्राकारेण अरण्यम् अभिव्याप्य तत्रत्यान् वन्यपशून् प्रेरयन्तः अस्मदभिमुखम् आगमिष्यन्ति। एतेन मृगाः ते दुष्टाः चापि बद्धाः भविष्यन्ति। एवंक्रमेण समग्रम् अरण्यं शोधितं चेत् केषुचित् एव दिनेषु युद्धं विना एव सर्वे विद्रोहिणः उन्मूलिताः भविष्यन्ति। कथम् अस्ति एषा योजना?" इति।

"अहो! अपूर्वं चिन्तनं भवतः! असदृशी बुद्धिमत्ता भवतः" इति प्रशंसावाक्यानि उक्तवान् सर्वदमनः।



"योजनां कार्यान्वितां कर्तुम् अविलम्बेन उद्युक्तः भवतु भवान्" इति आज्ञापितवान् वीरसिंहः।

समग्ररात्रौ मृगयागमनसन्नाहः प्रवृत्तः। प्रातःकालाभ्यन्तरे सर्वं सज्जम् अभवत्।

अनन्तरदिने वीरसिंहः शताधिकैः सैनिकैः सेनापतिना सर्वदमनेन च सह अरण्यं प्रति प्रस्थितवान्। जयानन्दमुनेः आश्रमः यत्र आसीत् स एव प्रदेशः वैरिशोधनार्थं मृगयार्थं च निश्चितः आसीत्।

वीरसिंहः परितः पश्यन्– "अद्य मया व्याघ्रः, सिंहः, वृकः, भल्लूकः इत्यादयः वन्यमृगाः मारणीयाः। अतः भवन्तः सर्वे अग्रे गत्वा भेरी-ढक्का-काहलादिभिः वाद्यैः



वन्यमृगान् मदभिमुखं प्रेरयन्तु" इति भटान् आज्ञापितवान्।

सैनिकाः सर्वे महता उत्साहेन विविधवाद्यध्वनिम् उत्पादयन्तः कोलाहलं कुर्वन्तः अरण्यं प्रविष्टवन्तः। वीरसिंहः अरण्यसीमायां स्थितः आसीत्।

जयानन्दमुनेः शिष्याः धावन्तः गत्वा अरण्ये उत्पन्नं कोलाहलं मुनिं विस्तरेण निवेदितवन्तः।

जयानन्दमुनिः सन्दीपं– "भवान् कुत्रापि निलीय तिष्ठतु" इति सूचयित्वा शुकीं मल्लिकाम् आहूय– "मल्लिके, भवती व्याघ्र-भल्लूकी-गजप्रभृतीन् त्वरया सूचयतु यत् सर्वैः जागरूकतया स्थातव्यम् इति" इति उक्तवान्।

मुनेः आज्ञां कार्यान्वितां कर्तुं शुकी ततः उड्डीय गतवती।

किन्तु एतदभ्यन्तरे एव भल्लूकी अपाये पतिता एव। कर्णकठोरं शब्दं श्रुत्वा सा पुत्रवत् पालितस्य युवराजस्य रक्षणार्थम् उद्युक्ता। इतस्ततः धावन्ती सा स्वरक्षणम् एव विस्मृतवती आसीत्।

भल्लूकीं दृष्ट्वा वीरसिंहः सन्तोषेण– "अहो भल्लूकी प्राप्ता। तां जालेन बध्नन्तु" इति उच्चैः उक्तवान्।

समीपे स्थिताः भटाः झटिति भल्लूकीम् उद्दिश्य जालं क्षिप्तवन्तः। भल्लूकी जालबद्धा अभवत्। सैनिकाः तां परितः स्थितवन्तः।

भल्लूकी बन्धनात् विमुक्तिं प्राप्तुं बहुधा प्रयतते। सैनिकाः तु शूलादिकं प्रदर्शयन्तः तां भाययन्ति स्म।

भल्लूकीग्रहणेन सन्तुष्टः वीरसिंहः उच्चैः हसन्– "साधु! प्रथमः प्रयासः सफलः! सर्वे वन्यमृगाः एवम् एव ग्रहीतव्याः" इति उक्त्वा पार्श्वे स्थितं सर्वदमनं क्षीणेन स्वरेण उक्तवान्– "विद्रोहिणः शत्रवः अपि एवम् एव ग्रहीतव्याः" इति।

"आं महाप्रभो, सजीवं गृहीतं चेदेव स्वारस्यम्। मारणेन तु न तथा सन्तोषः" इति वदन् अग्रे प्रस्थितवान् सर्वदमनः।

अत्रान्तरे "सर्वं स्थगयन्तु तावत्" इति कश्चन गभीरः दृढः स्वरः श्रुतः। सर्वे



परिवृत्य दृष्टवन्तः।

गुल्मानां मध्यतः अग्रे आगच्छन् जयानन्दमुनिः– "भोः, कृपया सर्वे क्षणकालं सावधानं शृण्वन्तु। सुमेधराज्याधिपाः इतः पूर्वं कदापि एतं प्रदेशं प्रति एवं न आगतवन्तः। कुलगुरवः सर्वे एतस्मिन् एव प्रदेशे तिष्ठन्तः शान्तं जीवनं यापितवन्तः। अतः एषः प्रदेशः पवित्रतमः इति भाव्यते। एतस्मिन् प्रदेशे कोलाहलः, मृगयाविनोदः, अन्यविधव्यवहारः वा न उचितः। अतः इदानीं भवतां निर्गमनम् एव शोभते" इति उक्तवान्।

एतत् श्रुत्वा वीरसिंहः उपहासयुक्तेन स्वरेण– "अहो वचनम्! केनचित् राज्ञा किमपि कृतं चेत् अन्यैः राजभिः अपि तथैव करणीयम् इति न नियमः। राजानः सर्वशक्ताः। यथा इच्छा तथा कर्तुम् अर्हन्ति ते। अरण्यवासिनः राजधर्मं कथं वा जानीयुः" इति उक्तवान्।

"उत्तमः राजा परम्परागतं सम्प्रदायम् अनुसरति। संन्यासिनः गौरवेण पश्यति च" इति उक्तवान् जयानन्दमुनिः।

"माम् उपदेष्टुम् उद्युक्तः कः भवान्? माम् अनुत्तमं भावयति वा भवान्?" इति कोपेन पृष्टवान् वीरसिंहः।

"उत्तमत्वम् अधमत्वं वा तत्तस्य व्यवहारेण निर्णीतं भवति महाराज!" इति उक्तवान् जयानन्दमुनिः।

"व्यवहारेण निर्णयः? कः निर्णेता? भवान् एव वा? अहो दुर्गतिः! अस्माकं राज्ये भवादृशाः अपि दृप्ताः सञ्जाताः सन्ति" इति उक्तवान् वीरसिंहः।

अत्रान्तरे जालबद्धा भल्लूकी अग्रिमं पादं बहिः प्रसार्य तीक्ष्णैः नखैः एकस्य सैनिकस्य मुखे व्रणम् अकरोत्। सः भटः उच्चैः आक्रन्दनं कृतवान्।

एतत् श्रुत्वा परिवृत्य दृष्ट्वा वीरसिंहः कठोरस्वरेण आज्ञापितवान्– "तं दुष्टां भल्लूकीं मारयन्तु" इति।

"सा भल्लूकी न दुष्टा, वीरसिंह! भवन्तः तां बहुधा पीडितवन्तः। सा स्वस्य रक्षणार्थं प्रयतमाना अस्ति" इति उक्तवान् जयानन्दमुनिः।

"कीदृशः गर्वितः मुनिः भवान्! राजाधिराजं मां नाम्ना आहूवयति खलु? अहो औद्धत्यम्! एषः प्रदेशः किं भवतः, येन भवान् माम् आज्ञया निवारयेत्?" इति कोपेन उक्तवान् वीरसिंहः।

"वत्स, वीरसिंह! एषः प्रदेशः न मम, न वा भवतः। प्रकृतिमातुः एषा भूमिः" इति उक्तवान् जयानन्दमुनिः।

एतत् वचनं श्रुत्वा वीरसिंहः महता कोपेन– "एषः वृद्धः औद्धत्येन व्यवहरन् अस्ति। एतं कारागारे स्थापयन्तु" इति सैनिकान् आज्ञापितवान्।

राजाज्ञाम् अनुसरन्तः सैनिकाः अग्रे आगत्य जयानन्दमुनिं गृहीतवन्तः। तत्क्षणे एव मृगपक्षिणाम् आक्रन्दनम् उत्पन्नम्।

'किम् एतत्?' इति सर्वे आश्चर्येण पश्यन्तः आसन्। तावता गुल्मानां मध्यतः आगतः कश्चन बाणः वीरसिंहस्य पादयोः समीपं भूमौ लग्ना।

तस्मिन् बाणे एकं पत्रं बद्धम् आसीत्। पत्रे एवम् आसीत्– "वीरसिंह! पत्रप्रेषणविचारं परित्यज्य भवतः प्राणान् अपहर्तुं शक्यम् आसीत्। चौर्येण प्राणापहरणम् अनुचितम् इति मत्वा तथा न कृतम्। भल्लूकीं बन्धविमुक्तां कृत्वा मौनम् इतः निर्गच्छतु। अन्यथा घोरः परिणामः सम्मुखीकरणीयः भवेत्" इति।

पत्रे लिखितां वार्तां श्रुत्वा भीतः कुपितः च



वीरसिंहः– "तं बाणप्रयोक्तारं बध्नन्तु भोः, सः अत्रैव समीपे अस्ति" इति कठोरस्वरेण उक्तवान्। सैनिकाः आयुधम् उन्नीय चतसृषु दिक्षु गतवन्तः।

'पत्रे यथा लिखितं तथा बाणः मम शरीरं प्रविष्टः यदि स्यात् तर्हि कीदृशी दुर्घटना अभविष्यत्! अपरिचिते अरण्ये किमपि असम्भाव्यं न' इति आलोच्य वीरसिंहः अङ्गरक्षकान् उक्तवान्– "भल्लूकी, एषः वृद्धः संन्यासी च बद्धौ। एतावता अलम्। एताभ्यां सह वयं राजधानीं गच्छाम। भटाः बाणप्रयोक्तारं बद्ध्वा आनेष्यन्ति" इति।

अत्रान्तरे अरण्ये सैनिकानाम् आक्रन्दनं हाहाकारः च श्रुतः। सैनिकाः पतनम् अपि

अविगणयन्तः धावन्तः आगच्छन्तः सन्ति। केचन भीत्या वृक्षम् आरुह्य स्थिताः दृश्यन्ते।

"अस्माभिः क्षणाभ्यन्तरे इतः पलायनं करणीयम्। अन्यथा वन्यमृगाः पक्षिणः च सम्भूय आक्रम्य अस्मान् मारयिष्यन्ति" इति वृक्षम् आरुह्य स्थितः एकः भटः उक्तवान्।

व्याघ्राणां गर्जनेन, गजानां बृंहणेन, कपीनां कीच्कारेण, शृगालानां रुतेन, उलूकादीनां घूङ्कारेण, पक्षिणां कलरवेण च तत् वनं व्याप्तम् अभवत्।

कश्चन कपिः अकस्मात् आगत्य वीरसिंहस्य किरीटम् अनयत्। काकः कश्चन सर्वदमनस्य उष्णीषम् अनयत्। सर्पाः फूत्कुर्वन्तः समीपम् आगतवन्तः।

अरण्ये अकस्मात् उत्पन्नात् ध्वनितः भीताः अश्वाः हेषारवं कुर्वन्तः, कूर्दन्तः, रज्जुं च्छित्वा कुत्रापि पलायितवन्तः।

एताभ्यः सर्वाभ्यः विचित्रघटनाभ्यः भीताः वीरसिंह-सर्वदमनप्रभृतयः, सैनिकाः च किङ्कर्तव्यतामूढाः सन्तः भल्लूकीं जयानन्दमुनिं च तत्रैव परित्यज्य प्राणरक्षणाशया ततः पलायितवन्तः।

मृगपक्षिणाम् आक्रमणात्, वेगेन धावनात्, पतनाच्च नितरां व्रणिताः वीरसिंहसैनिकाः अपि आक्रन्दनं कुर्वन्तः ततः पलायितवन्तः।

ते सर्वे कथञ्चित् अरण्यसीमाम् अतिक्रम्य विशाले प्रदेशे सम्मिलिताः। वन्यमृगाः तु अनुसृत्य आगच्छन्तः एव सन्ति। कश्चन व्याघ्रः वीरसिंहं लक्ष्यीकृत्य आक्रमणम् अकरोत्। भीतः वीरसिंहः भूमौ पतितः मूर्च्छां गतः च।

"प्रियमित्राणि! अद्य एतावता अलम्। प्रत्यागच्छन्तु सर्वे" इति कश्चन गम्भीरः मधुरः कण्ठस्वरः श्रुतः। एतत् श्रुत्वा सर्वे वन्यमृगाः मन्त्रेण प्रभाविताः इव मौनं प्रतिगतवन्तः, अरण्यं प्रविष्टवन्तः च।

एषः कण्ठस्वरः किं जयानन्दस्य? न तस्य। पर्वतशिखरे स्थितस्य सुन्दरस्य युवकस्य कण्ठस्वरः एषः। — (अनुवर्तते)






# आचारपालनम्

इतः पूर्वं बहुवारं तेनैव मार्गेण गतम् इत्यतः नेत्रे निमील्य अपि विना स्खलनं गन्तुम् अर्हः त्रिविक्रमः अन्धकारं सर्वथा अविगणय्य पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। त्रिविक्रमस्य मुखात् कथमपि वचन निस्सारणीयम् इति सङ्कल्पितवान् वेतालः तदा अवदत्– "अये राजन्! अन्तःपुरे सुन्दरे परिसरे कोमले तल्पे येन भवता शयनं करणीयम् आसीत् सोऽयं भवान् एवम् निर्मानुषे प्रदेशे कष्टम् अनुभवन् अस्ति खलु? अहो दौर्भाग्यम्! भवादृशः एव दौर्भाग्यशाली लोल्लटः नाम कश्चित् पूर्वम् आसीत्। मार्गायासपरिहारार्थं तस्य कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा




पूर्वं विन्ध्याटव्यां बहुविधाः अटविकाः निवसन्ति स्म। यः बाणप्रयोगे, खड्गयुद्धे, बाहुयुद्धे च अन्यान् सर्वान् जेष्यति सः तत्तस्याः जातेः नायकः भवति स्म। अरण्ये अटविकानां विभिन्नानि कुलानि आसन्। अतः नायकाः अपि तत्र बहवः।

वृद्धनायकस्य मरणस्य कारणतः कदाचित् लोल्लटः स्वजातेः नायकः जातः। जातिसम्बद्धेषु आचारेषु लोल्लटस्य महती श्रद्धा। जातिभेदात् अटविकानां विधिनिषेधेषु अपि भेदः भवति स्म। लोल्लटस्य जातौ शशमांसभक्षणं निषिद्धम् आसीत्।

कदाचित् केचन वृद्धाः कञ्चन तरुणं बद्ध्वा लोल्लटस्य पुरतः नीतवन्तः।

"कः एषः? एतेन कः अपराधः कृतः?" इति पृष्टवान् लोल्लटः।

"एषः अस्मज्जातीयः एव। अरण्ये कुत्रचित् एषः शशमांसं खादन् आसीत्। अतः एतं वयम् अत्र आनीतवन्तः" इति उक्तवन्तः वृद्धाः।

लोल्लटः तं युवकं तीक्ष्णया दृष्ट्या दृष्टवान्। यद्यपि सः युवकः, किन्तु सर्वथा दुर्बलः। दृढं स्थातुम् अपि सामर्थ्यं नास्ति तस्य।

"शशमांसभक्षणम् अपराधाय इति न जानाति स्म वा भवान्?" इति पृष्टवान् लोल्लटः।

तदा सः युवकः क्षीणेन स्वरेण— "जानामि स्म एव। किन्तु मम परिस्थितिः नितरां शोचनीया अस्ति। गते पक्षे मम धनुः बाणाः च नष्टाः। तान् अन्वेष्टुं गतः अहम् अरण्ये मार्गभ्रष्टः अभवम्। तीव्रां बुभुक्षां सोढुम् अशक्तः अहं समीपे दृष्टं शशं पाषाणेन मारयित्वा खादितुम् उद्युक्तः आसम्" इति निवेदितवान्।

"कारणं यत्किमपि स्यात् नाम। भवता अक्षम्यः अपराधः कृतः इति तु निश्चितम्। अपराधस्य दण्डः अवश्यं स्यात्" इति उक्त्वा तान् वृद्धान् आज्ञापितवान् लोल्लटः— "एतेन कृतः दोषः इतःपरं अस्मज्जातीयेन केनापि न करणीयः। अतः एतं नद्याः अपरस्मिन् तीरे स्थिते भल्लूकबहुले प्रदेशे त्यक्त्वा

आगच्छन्तु" इति।

लोल्लटजातीयाः यत्र निवसन्ति तस्मिन् अरण्ये अन्या अपि अटविकजातिः आसीत्। तस्याः जातेः नायकः वेगमल्लः। लोल्लटजातीयाः व्याघ्रचर्मणः, गजचर्मणः, गजदन्तस्य, लतामूलानां च विक्रयणेन धनं सम्पादयन्ति स्म। एतत् दृष्टवतः वेगमल्लस्य मनसि असूया उत्पन्ना।

वेगमल्लः कदाचित् सायङ्काले स्वजातीययुवकैः सह लोल्लटवसतेः उपरि हठात् आक्रमणं कृतवान्। लोल्लटः तु स्वजातीयानां रक्षणे सदा जागरूकः। अतः सः एतेन आक्रमणेन धैर्यच्युतः न जातः। सः धैर्येण वेगमल्लं सम्मुखीकृतवान्। युद्धे वेगमल्लस्य पराजयः अभवत्। वेगमल्लः बन्दी जातः।

लोल्लटस्य बन्धनात् विमोचनं प्राप्तुम् इच्छन् वेगमल्लः लोल्लटाय अनेकाः धेनूः अजाः च दत्तवान्। "भवता यथा आदिश्यते तथा करोमि" इति वचनं दत्तवान् च। अतः लोल्लटः वेगमल्लं बन्धमुक्तं कृतवान्।

एतेन विजयेन उत्साहं प्राप्य लोल्लटः स्वजातीयान् वेगमल्लजातीयान् च सर्वान् युवकान् मेलयित्वा प्रबलं सैन्यं विशेषतः सज्जीकृत्य समीपस्थान् बहून् नायकान् जितवान्।

प्रतिवर्षं विन्ध्यारण्यतः वैशालीराजाय गजदन्त-व्याघ्रचर्मादयः वन्यसम्पत्तयः



प्रेष्यन्ते स्म। एतत् स्थगितवान् लोल्लटः एतेन व्यवहारेण कुपितः वैशालीराजः सैन्येन सह आगत्य विन्ध्यारण्यवासिनाम् उपरि आक्रमणं कृतवान्।

वैशालीराज्यस्य सैन्यबलम् अधिकम् आसीत्। किन्तु तत् सैन्यम् अरण्ययुद्धं न जानाति स्म। लोल्लटस्य अनुयायिनः च अटवीयुद्धे निपुणाः। ते गुल्मादीनां पृष्ठतः तिष्ठन्तः शूलबाणादीनां प्रयोगेण वैशालीसैनिकान् मारितवन्तः। एतादृशम् आक्रमणं सम्मुखीकर्तुम् अशक्ताः केचन वैशालीसैनिकाः पलायितवन्तः।

अन्ते लोल्लट-वैशालीराजयोः बाहुयुद्धं प्रवृत्तम्। एतस्मिन् युद्धे लोल्लटः चातुर्येण



व्यवहरन् राजानं हत्वा स्वयं वैशालीराज्यस्य अधिपतिः जातः।

इतरेषां नागरिकाणां ये अधिकाराः ते एव अधिकाराः लोल्लटेन अटविकेभ्यः अपि दत्ताः। अटविकवीराः बहवः सैन्ये प्रवेशं प्राप्तवन्तः। तेषु केचन स्वसामर्थ्यबलात् उन्नतं स्थानम् अलङ्कृतवन्तः अपि।

कदाचित् लोल्लटः राजास्थाने उपविष्टः आसीत्। तदा केचन अटविकवृद्धाः एकं नागरिकं युवकं बद्ध्वा आनीय लोल्लटस्य पुरतः उपस्थाप्य– "राजन्! अटविकानाम् आचारव्यवहारं भवान् जानाति एव। अटविककुले जातेन भवता ते आचाराः अवश्यं रक्षणीयाः। एषः दुष्टः अस्मज्जातीयायां कन्यायाम् अनुरक्तः सन् तया सह रहसि नगरं प्रति पलायमानः आसीत्। तत्समये एषः बद्धः अस्माभिः। योग्येन दण्डेन दण्डनीयः एषः" इति उक्तवन्तः।

लोल्लटः किञ्चित्कालं यावत् चिन्तामग्नः जातः। अनन्तरं सः अटविकवृद्धानां व्यवहारं खण्डयन् तान् प्रतिप्रेषितवान्। अटविकयुवत्याः नागरिकयुवकस्य च विवाहं स्वयं निर्वर्तितवान् च। एतादृशः विवाहः शासनविरुद्धः न इति देशे सर्वत्र वार्तां प्रसारितवान् सः।

एतस्य परिणामतः अटविकेषु अशान्तिः उत्पन्ना। 'राज्ञः शासनम् अटविकानाम् आचारं व्यवहारं च नाशयति' इति प्रचारं कृतवन्तः अटविकनायकाः।

लोल्लटस्य पितृव्यपुत्रः जटाचूडः अटविकान् मेलयित्वा सैन्यं सज्जीकृत्य तेषु उत्साहं पूरयित्वा राजधानीम् आक्रान्तुं विन्ध्याटवीतः निर्गतः। राजधानीसमीपे विशाले प्राङ्गणे लोल्लटः सैन्येन सह आगत्य अटविकदलं सम्मुखीकृतवान्।

युद्धारम्भात् पूर्वं कश्चन सेनापतिः लोल्लटम् उक्तवान्– "प्रभो, अभिमुखं स्थिताः सर्वे भवतः जातिबान्धवाः एव। तेषां नायकः तु भवतः पितृव्यस्य पुत्रः। बान्धवानां मारणं धर्मः न। अतः सन्धिप्रस्तावः इदानीम् उचितः स्यात् ननु?" इति।

लोल्लटः तं सेनापतिं तीक्ष्णया दृष्ट्या पश्यन् मौनं स्थितवान्। क्षणकालस्य अनन्तरं युद्धार्थं सेनाम् आज्ञापितवान्। एतस्मिन् युद्धे अटविकानां दलं समूलं नष्टम् अभवत्।

वेतालः एवं कथां समाप्य अवदत्— "राजन्! यः बुभुक्षाम् असहमानः आपद्धर्मरूपेण शशमांसं भक्षितवान् तं भल्लूकमयम् अरण्यं प्रति प्रेषितवान् लोल्लटः। एवम् अत्र आचारपालनविषये कठोरता प्रदर्शिता तेन। किन्तु स एव लोल्लटः ज्येष्ठैः नियमविरुद्धत्वेन निर्णीतं विवाहं स्वयं निर्वर्तितवान्। किं राजत्वप्राप्त्या तस्य विवेकः भ्रष्टः? अन्यच्च सेनापतिना ज्ञाप्यमानः अपि सः स्वजातिबान्धवान् युद्धे निर्दयं मारितवान्। एषः व्यवहारः किम् उचितः? दयार्हे कठोरता, अस्थाने अनुग्रहः च न प्रदर्शितः वा लोल्लटेन? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्— "यदा लोल्लटः स्वजातिमात्रस्य नायकः आसीत् तदा जातिनियमपालने कठोरतां प्रदर्शितवान्। किन्तु अनन्तरकाले तेन राजपदवी प्राप्ता। राजधर्मः जातिधर्मापेक्षया श्रेष्ठः। 'सर्वे समानाः, जातिभेदस्तु कल्पितः' इति राजा सन् जानाति स्म लोल्लटः। अतः अटविकयुवति-नागरिकयुवकयोः विवाह स्वयं निर्वर्तितवान् सः। शासनविरोधं ये कुर्वन्ति ते निर्दयं दण्डनीयाः एव। तादृशे सन्दर्भे स्वजनपक्षपातः न करणीयः। एतं राजधर्मं जानन् लोल्लटः निर्व्यामोहं व्यवहृतवान्। अटविकाः च स्वकर्मणः फलम् अनुभूतवन्तः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# विस्मरणशीलः

राजपुरनामके ग्रामे रामनाथः नाम कश्चन गृहस्थः निवसति स्म। तस्य स्मरणशक्तिः नितरां दुर्बला। कस्यापि कार्यस्य निमित्तं गतः सः मध्ये एव कार्यं विस्मृत्य प्रत्यागच्छति। एतादृशी घटना प्रतिदिनं भवति एव। अतः तस्य पत्नी जानकी सदापि कोपं प्रदर्शयति।

राजपुरस्य समीपे शान्तिनगरं नाम नगरम् अस्ति। राजपुरीयाः शान्तिनगरात् आवश्यकानि वस्तूनि क्रीत्वा आनयन्ति। कदाचित् रामनाथस्य पत्नी जानकी पतिम् उक्तवती यत् नगरं गत्वा कानिचन वस्तूनि आनेतव्यानि इति।

पत्न्याः वचनम् अङ्गीकुर्वन् रामनाथः उक्तवान्– "भोः, अहं विस्मरणशीलः इति भवती जानाति एव। आनेतव्यानि वस्तूनि च बहूनि। अतः तेषां सर्वेषां वस्तूनां नाम लिखित्वा ददातु। अन्यथा तिन्त्रीणी आनीता चेत् शर्करा विस्मृता भवेत्। तदुभयम् अपि आनीतं चेत् अन्यत् विस्मृतं स्यात्। तदा भवत्याः अपि क्लेशः। ममापि खेदः। अन्यच्च विस्मृतानां वस्तूनाम् आनयनार्थं पुनः श्वः नगरं प्रति गन्तव्यं भवेत्। तदा तु वृथा व्ययः, वृथा श्रमः च। किमर्थम् एतत्सर्वम्? चिटिका अस्ति चेत् न कस्यापि विस्मरणम्, न कोऽपि क्लेशः। भवत्याः अपि निश्चिन्तता। अतः सर्वं चिटिकाया लिखतु " इति।

"यादृशः देवः तादृशी पूजा करणीया। नान्या गतिः" इति वदन्ती जानकी अन्तः गत्वा आनेतव्यानां वस्तूनां नामानि चिटिकायां लिखित्वा तां चिटिकां रामनाथस्य हस्ते दत्तवती। रामनाथः शान्तिनगरं प्रति प्रस्थितवान्।

सायङ्काले रामनाथः नगरात् प्रत्यागतवान्। पतिं रिक्तहस्तं दृष्ट्वा जानकी आश्चर्येण पृष्टवती– "किम् एतत्? आनेतव्यानां वस्तूनां नामभिः युक्ता चिटिका दत्ता आसीत् खलु मया? किमर्थं रिक्तहस्ततया प्रत्यागतः भवान्? चिटिकानयनं विस्मृतवान् आसीत् वा?" इति।

तदा रामनाथः हसन् उक्तवान्– "चिटिका तु स्मृत्वा नीता। किन्तु धनं विस्मृत्य गतवान् आसम्। धनाभावे कथं वस्तूनाम् आनयनम्?" इति।

"अहो दौर्भाग्यम्! वृथा नगरं गत्वा आगतम्। एकं दिनं व्यर्थं यापितं भवता। श्वः अवश्यं स्मृत्वा धनं चिटिकां च नीत्वा वस्तूनि आनयतु। गुडः सर्वथा समाप्तः। तं प्रतिवेशिनीतः ऋणरूपेण आनेष्यामि" इति उक्तवती जानकी।

अनन्तरदिने प्रातः एव नगरं प्रति निर्गतवान् रामनाथः। किन्तु सायं यथापूर्वं रिक्तहस्तः सन् प्रत्यागतः।

एतत् दृष्ट्वा कोपमिश्रितेन स्वरेण– "अद्यापि रिक्तहस्ततया एव प्रत्यागतः। प्रातः माम् अनुक्त्वा अपि गतः। किमर्थं वस्तूनि न आनीतानि?" इति पृष्टवती जानकी।

म्लानवदनः रामनाथः क्षीणस्वरेण उक्तवान्– "किं वदामि मम दौर्भाग्यम्?



वस्तूनि क्रेतुम् आपणं गतः अहं कोषे हस्तं स्थापितवान्। किन्तु किम् अस्ति तत्र? न किमपि! अहं चिन्तयामि नगरगमनमार्गे केनाऽपि चोरेण सर्वं चोरितं स्यात् इति" इति।

एतत् वचनं श्रुत्वा हसन्ती जानकी उक्तवती– "भवतः विस्मरणशीलता अग्रिमे जन्मनि अपि अपगता न भवेत् इति भाति मम" इति।

"अग्रिमजन्मनः विचारे अनन्तरं चिन्तयाम तावत्। एतस्य जन्मनः विषयं प्रथमं चिन्तयतु। एतादृश्याः विस्मरणशीलतायाः कारणतः गृहकार्याणां निर्वहणं कथम् इत्येव मम समस्या" इति खेदमिश्रितेन स्वरेण उक्तवान् रामनाथः।

"मम मनसि यत् आसीत् तदेव उक्तं भवता अपि। तत् आस्तां तावत्। नगरगमनमार्गे चौर्यं जातं स्यात् इति विषयं विस्मरतु। कोषे धनं न आसीत् यत् तस्य अन्यत् किमपि कारणं स्यात् वा इति चिन्तयतु" इति उक्तवती जानकी।

'केनापि विशेषाभिप्रायेण पत्नी माम् एवं वदन्ती अस्ति' इति ज्ञातवान् रामनाथः। सः पत्न्याः मुखं निर्निमेषं पश्यन् उक्तवान्– "विस्मरणशीलताकारणतः मम चिन्तनशक्तिः अपि क्षीणा जाता इति भाति। अतः अन्यत् कारणं किमपि न स्फुरति। भवती एव कारणं वदतु" इति।

तदा जानकी हसन्ती उक्तवती– "ह्यः रात्रौ शयनसमये भवान् चिटिकां धनं च एकस्य युतकस्य कोषे स्थापितवान्। किन्तु अद्य प्रातः नगरं प्रति निर्गमनसमये त्वराकारणतः अन्यत् एव युतकं धृत्वा गतवान्" इति।

"एवं वा वस्तुस्थितिः? धनं नष्टम् इति भावयता मया नगरे महत् दुःखम् अनुभूतम्। आत्मनः विषये एव घृणा अपि आगता। श्वः अपि एवं दोषः यथा न सम्भवेत् तथा एकम् उपायं करिष्यामि अहम्" इति उक्तवान् रामनाथः।

"किं करिष्यति भवान्?" इति कुतूहलेन पृष्टवती जानकी।

"यस्य युतकस्य कोषे धनं चिटिका च स्थाप्यते तदेव युतकं धृत्वा अद्य शयनं करिष्यामि। श्वः प्रातः उत्थाय नगरं गमिष्यामि। कथम् अस्ति मम उपायः?" इति पृष्टवान् रामनाथः।

"उपायः तु समीचीनः अस्ति। किन्तु एतस्य आवश्यकता नास्ति इदानीम्। भवान् धनम् अस्वीकृत्य नगरं गतः इति ज्ञातं मया। वस्तूनि तु अद्यैव आवश्यकानि आसन्। अतः प्रतिवेशिबालकद्वारा अहं वस्तूनि आनायितवती। एकघण्टातः पूर्वं सर्वाणि वस्तूनि गृहं प्रति आगतानि" इति उक्तवती जानकी।



# ज्ञानभाण्डागारम्

## सः कः स्यात्?

कश्चन कविः गीतरचनायाम् उद्युक्तः आसीत्। एवं रचनासन्दर्भे कस्मिंश्चित् घट्टे तस्य लेखनं स्थगितम्। मनसि भावाः आवर्तन्ते। भावानुगुणं शब्दाः तु न स्फुरन्ति। ये शब्दाः स्फुरन्ति तैः तृप्तिं न अनुभवति कविः। दीर्घकालं यावत् चिन्तनं कृतं चेत् अपि लेखनं तु न अनुवृत्तम्। तदानीं स्नानसमयः आसन्नः। कविः लेखनीं ताडपत्रं च पार्श्वे स्थापयित्वा स्नानार्थं नदीं गतवान्। प्रत्यागच्छता तेन दृष्टं यत् तदीया पत्नी भोजनं कुर्वती अस्ति। तया इतः पूर्वं कदापि पत्युः भोजनात् पूर्वं भोजनं न कृतम् आसीत्। "एवं किमर्थम्?" इति पत्नीं पृष्टवान् कविः। "किं वदति भवान्? किञ्चित्कालात् पूर्वं भवान् एव आगत्य पद्यं लिखित्वा भुक्त्वा गतवान् खलु?" इति पृष्टवती पत्नी।

आश्चर्यम् अनुभवन् कविः ताडपत्रं दृष्टवान्। तत्र तस्य मनसि आवर्तमानः विषयः पद्यरूपेण केनाऽपि लिखितः आसीत्। 'एवं कृतवान् भगवान् एव' इति निश्चितवान् कविः परमसन्तुष्टः अभवत्।

वदन्तु, सः कविः कः स्यात्?

(उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. भारतेन यदा स्वातन्त्र्यं प्राप्तं तदा भारतीय-राष्ट्रिय-कांग्रेस्-संस्थायाः अध्यक्षः कः आसीत्?

२. कः राजा गङ्गैकोण्डनामकेन उपाधिना विभूषितः आसीत्? किमर्थं स च उपाधिः तेन प्राप्तः?

३. तेन किं नगरं स्थापितम्?

४. भारतगणराज्येन योग्यव्यक्तीनां कृते दीयमानाः चतस्रः प्रशस्तयः काः?

५. प्राचीनभातरस्य रेखागणितशास्त्रज्ञाः के?

(उत्तराणि ३६तमे पृष्ठे)

# सिन्धुनदः सिन्धप्रदेशः च




भारतदेशः आंग्लभाषया 'इण्डिया'शब्देन उच्यते। सिन्धुनदः आंग्लेयैः 'इण्डस्' इति उक्तः। तदाधारेण इण्डियाशब्दः उत्पन्नः। काश्मीर-पञ्जाबभूभागे प्रवहन् सिन्धुनदः अरबसागरेण मिलति। सोहन्, झेलम्, चिनाब्, रावी, बियास्, सतलज् इत्येताः नद्यः सिन्धुनदेन मिलन्ति।

सिन्धुनदम् उभयतः स्थितः विशालः भूप्रदेशः सिन्धप्रदेशः इति उच्यते। सहस्रशः वर्षेभ्यः पूर्वम् एव अत्र श्रेष्ठा संस्कृतिः विकासं गता आसीत्। हरप्पा-मोहिञ्जोदारो-विषये केन वा न श्रुतम्? एतस्मिन् प्रदेशे पञ्चसहस्रवर्षेभ्यः पूर्वं स्थितानां सुसम्पन्नानां नगराणाम् अवशेषाः प्राप्ताः सन्ति। एतानि नगराणि

विशालैः मार्गैः, उन्नतैः भवनैः, रमणीयैः उद्यानैः च युक्तानि आसन्। काचक-ताम्र-कांस्य-रजत-सुवर्ण – प्रभृतिभिः निर्मिताः उत्तमाः कलाकृतयः अत्र अवशेषरूपेण प्राप्ताः सन्ति।

सिन्धुनदेन बहूनां साम्राज्यानाम् उदयः अस्तः च दृष्टः अस्ति। प्राचीने भारतीयसाहित्ये एतस्य प्रदेशस्य सुसम्पन्नता श्रेष्ठता च सम्यक् वर्णिता दृश्यते। अलेक्साण्डर् एतस्य प्रदेशस्य उपरि आक्रमणं कृतवान् आसीत्। सिन्धप्रदेशस्य अन्तिमः राजा दहिरः। एषः ७११ तमे वर्षे मोहम्मदकासिमं विरुध्य कृते युद्धे प्राणान् अत्यजत्।

१९४७ तमे वर्षे दुर्दैववशात् भारतस्य विभागः जातः। सिन्धप्रदेशः पाकिस्थानस्य अधीनः जातः। सिन्धप्रदेशस्थं प्रमुखं नगरं कराची।

## रसवार्ता:




### अत्युन्नतः पुरुषः

एतस्य वर्षस्य जुलैमासे प्रकाशितात् वार्तापत्रात् ज्ञायते यत् बङ्गलादेशीयः परिमल बर्मन् (२६ वर्षीयः) एव प्रपञ्चस्तरे अत्युन्नतः पुरुषः इति। तस्य औन्नत्यं २.४५ मीटरात्मकम् (७.२ द्वादशाङ्गुलात्मकं वा) अस्ति। अस्वास्थ्यसन्दर्भे यदा सः ढाकास्थं चिकित्सालयं प्रति नीतः तदा एतस्य निमित्तं सुदीर्घः मञ्चः निर्मापितः इति श्रूयते।

### नूतनः विक्रमः

गिन्नीस्पुस्तके (गिन्नीस् बुक् आफ् रेकार्ड्स्) भोपालप्रदेशीयस्य बिजेशश्रीवास्तवस्य (२२ वर्षीयः) नाम सद्यः योजितम्। यतः सः जुलैमासे १५ दिनाङ्के १३ सङ्ख्याकायाः सूचिकायाः रन्ध्रे आहत्य ६,०६२ तन्तून् प्रवेशितवान्।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. मृत्युदेवतातः मरणस्य रहस्यं ज्ञातवतः नचिकेतसः उल्लेखः प्राचीने कस्मिन् ग्रन्थे उपलभ्यते?

२. नोबेल्प्रशस्तिविजेत्री का कवयित्री स्वस्य सर्वेषु काव्येषु मातृत्व-बाल्य-प्रकृति-परमेश्वरादीन् विषयान् एव प्रस्तुतवती आसीत्?

३. सा कस्य देशस्य निवासिनी आसीत्?

४. तया नोबेल्प्रशस्तिः कदा प्राप्ता?

५. लिपिरहिताः भाषाः अपि अविहाय भारते कति मातृभाषाः स्युः?

# उत्तराणि

## सः कः स्यात्?

गीतगोविन्दस्य रचयिता जयदेवः।

## सामान्यज्ञानम्

१. डा।। राजेन्द्रप्रसादः।

२. चोलराजः राजेन्द्रः (क्रि.श. ११ शतके जातः।) एषः गङ्गराजान् जित्वा एतम् उपाधिं प्राप्तवान्।

३. इदानीं तमिळनाडुराज्ये स्थितं गङ्गैकोण्डा चोलापुरम्।

४. भारतरत्नं, पद्मविभूषणः, पद्मभूषणः, पद्मश्रीः इति।

५. आर्यभटः (षष्ठे शतके जातः), वराहमिहिरः (षष्ठे शतके जातः), ब्रह्मगुप्तः (सप्तमे शतके जातः), महावीराचार्यः (नवमे शतके जातः), भास्कराचार्यः (द्वादशे शतके जातः) च।

## साहित्यज्ञानम्

१. ऋग्वेदे।

२. गब्रिएला मिस्ट्रल् (१८८९-१९५७)।

३. चिलीदेशस्य।

४. १९४५ तमे वर्षे।

५. ७०० स्युः। (१९७१ तमवर्षस्य गणनानुसारम्)।



# श्रीरामकृष्णपरमहंसः

(४)

कदाचित् काचित् नौका नदीतीरम् आगत्य स्थिता। नौकातः अवतीर्य आगच्छन्तीं काञ्चित् स्त्रियं दृष्टवान् गदाधरः। तस्याः हस्ते त्रिशूलम् आसीत्। मुखे च आध्यात्मिकसाधनातः प्राप्तः अपूर्वः प्रकाशः विलसति स्म। सा स्त्री तन्त्रविद्याप्रवीणा भैरवी आसीत्।

गदाधरः भैरवीं मातृसमानां भावितवान्। ताम् आदरेण स्वागतीकृतवान् गदाधरः। भैरवी ज्ञातवती यत् गदाधरः कश्चन महापुरुषः इति। सा गदाधरं तन्त्रविद्यारहस्यं बोधितवती।





भैरवी कदाचित् स्वस्य आराध्यदेवतायाः पुरतः नैवेद्यं स्थापयित्वा नेत्रे निमील्य ध्याननिमग्ना जाता आसीत्। गदाधरः तावता तत्र आगतः, नैवेद्यं खादितुम् उद्युक्तः च। भैरवी नेत्रे उद्घाट्य एतत् दृश्यं दृष्टवती। किन्तु तया कोपः न प्राप्तः। अपि तु परमसन्तोषः एव प्राप्तः। यतः सा गदाधरे आराध्यदेवतायाः दर्शनं प्राप्तवती आसीत्।




माथुरबाबुद्वारा आयोजितायां कस्याञ्चित् सभायां भैरवी अपूर्वं भाषणं कृतवती। तस्मिन् भाषणे सा उक्तवती यत् श्रुतिपुराणादिषु अवतारपुरुषस्य यानि लक्षणानि उक्तानि तानि सर्वाणि गदाधरे सन्ति, अतः गदाधरः कश्चन अवतारपुरुषः इति। कोऽपि तस्याः वचनं न खण्डितवान्।

कदाचित् कश्चन रामभक्तः संन्यासी दक्षिणेश्वरम् आगतवान्। सः आत्मना सह बालकस्य श्रीरामस्य मूर्तिम् आनीतवान् आसीत्। सः संन्यासी सजीवैः बालकैः सह यथा, तथा तया राममूर्त्या सह सम्भाषणं करोति स्म। गदाधरः एतं प्रसङ्गं महत्या आसक्त्या पश्यति स्म।







एकस्मिन् दिने गदाधरः संन्यासिप्रकोष्ठतः प्रत्यागच्छन् आसीत्। तदा तेन दृष्टं यत् सुन्दरः बालकः रामः तम् अनुसृत्य आगच्छन् अस्ति इति। 'राममूर्तिस्थः आत्मा एव एवं बालकरूपेण माम् अनुसरन् अस्ति' इति ज्ञातवान् गदाधरः। एतेन सः नितराम् सन्तुष्टः अभवत्।

संन्यासी तं बालकं रामलालनाम्ना आह्वयति स्म। सः रामलालः सदाऽपि गदाधरेण सह तिष्ठति स्म। फलं खादयतु इति, मया सह क्रीडतु इति च सः गदाधरं वदति स्म। गदाधरं विविधाभिः चेष्टाभिः पीडयति स्म। संन्यासी अन्वेष्टुम् आगच्छति चेत् कुत्रापि निलीय तिष्ठति स्म। संन्यासिना बहुधा तर्जितः अपि सः रामलालः स्वप्रवृत्तिं न त्यजति स्म।





गदाधरः स्नानार्थं नदीं गच्छति चेत् रामलालः तम् अनुसरति। नद्यां बहुकालं यावत् जलेन क्रीडति। बहुधा आहूतः चेदपि तीरं न प्रत्यागच्छति सः। रामलालस्य व्यवहारं दृष्ट्वा गदाधरः कदाचित् कुपितः भवति। किन्तु अनन्तरक्षणे एव स्वस्य अनुचितव्यवहारं जानन् पश्चात्तापम् अनुभवति च।

एकदा संन्यासी गदाधरम् उक्तवान्– "वत्स! रामलालः भवन्तं विना स्थातुं न इच्छति। अतः एतां राममूर्तिं भवान् स्वसमीपे एव स्थापयतु" इति। एवम् उक्त्वा तां मूर्तिं गदाधराय दत्त्वा ततः निर्गतवान् सः संन्यासी।





तेषु दिनेषु तोतापुरिः नाम योगी सुप्रसिद्धः आसीत्। कदाचित् सः नद्याः तीरे विहरन् आसीत्। तदा तेन एकान्ते उपविष्टः गदाधरः दृष्टः। तं दृष्ट्वा तोतापुरिः चिन्तितवान् यत् मया यत् वेदान्तज्ञानं सम्पादितं तत् बोधयितुम् एषः अर्हं पात्रम् इति। अर्हस्य जनस्य प्राप्त्या नितरां सन्तुष्टः अस्ति सः।

तोतापुरिः गदाधरस्य समीपं गत्वा पृष्टवान्– "वत्स! भवान् योगविद्यायाः अभ्यासं कर्तुम् इच्छति, उत वेदान्तमार्गम् अनुसर्तुम् इच्छति?" इति। "मम माता यथा आदिशति तथा करिष्यामि अहम्" इति उक्तवान् गदाधरः। अनन्तरं सः कालीमातुः मन्दिरं गत्वा मातरं प्रार्थितवान्। अल्पे एव काले प्रत्यागत्य तोतापुरिम् उक्तवान् सः– "गुरुदेव! अहं सन्नद्धः अस्मि" इति।







कदाचित् उषःकाले तोतापुरिः पवित्रम् अग्निं ज्वालितवान्। गदाधरद्वारा मन्त्रम् उच्चारितवान् च। एतस्य कार्यक्रमस्य अन्ते संन्यासः दत्तः गदाधराय। तस्मात् दिनात् गदाधरः 'रामकृष्ण'नाम्ना ख्यातः।

– (अनुवर्तते)



# अनक्षरज्ञः

बहुभ्यः वर्षेभ्यः पूर्वं कश्चन निर्धनः कृषिकः आसीत्। तस्य समीपे एका वृद्धा धेनुः आसीत्। सा धेनुः एव तस्य सम्पत्तिः। सा धेनुः ग्रामे इतस्ततः सञ्चारं कृत्वा स्वस्य उदरं पूरयति स्म।

कदाचित् तया धेन्वा कृषिक्षेत्रे स्थितानि हरितस्यानि दृष्टानि। हरितवर्णेन आकृष्टा सा वृतेः दौर्बल्यम् अन्विष्य वृतिम् अतिक्रम्य क्षेत्रं प्रविश्य सन्तोषेण सस्यानि अखादत्।

तच्च क्षेत्रं भूस्वामिनः। भूस्वामिनः सेवकः सस्यखादनमग्नां धेनुं दृष्टवान्। दण्डम् उन्नीय धावन् आगत्य सः धेनुं सम्यक् ताडितवान्। एतत् ताडनम् आसहमाना सा धेनुः भूमौ पतिता, तत्रैव प्राणान् अत्यजत् च।

जीवनाधारभूतायाः धेन्वाः मरणं दृष्ट्वा कृषिकः तत्पत्नी च नितरां दुःखितौ। कृषिकः भूस्वामिनः गृहं गत्वा दैन्येन प्रार्थितवान्– "भवतः सेवकः मम धेनुं मारितवान् यत् तदर्थं परिहारधनं दातव्यम्" इति।

"मया धनं दातव्यं वा? दीयते, तिष्ठतु" इति वदन् भूस्वामी सेवकम् आहूय 'एतं दशभिः कशाताडनैः दण्डयतु' इति आज्ञापितवान्। सेवकः तथैव कृतवान्। कृषिकः रुदन् गृहं प्रत्यागतवान्।

भूस्वामिगृहे प्रवृत्तं समग्रं श्रुत्वा कृषिकस्य पत्नी उक्तवती– "भूस्वामिना अन्याय्यं कृतं चेत् महाराजः खलु निवेदनीयः? राजा धर्मात्मा इति श्रूयते। अतः तं निवेदयतु। सः योग्यं निर्णयेत्" इति।

राजदर्शनसमये किं प्रवृत्तं, कः व्यवहारः इति लिखित्वा नेतव्यम् आसीत्। किन्तु कृषिकः न अक्षरज्ञः। तत्पत्नी अपि तथैव। अतः तौ एकम् उपायं चिन्तितवन्तौ। कृषिकः एकं काष्ठफलकम् आनीय तस्य उपरि

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

कृष्णाङ्गारेण स्वकुटीरं, भूस्वामिनः क्षेत्रं, तत्पार्श्वे भूस्वामिनः गृहं, शिथिलां वृतिं, सेवकस्य ताडनेन यत्र धेनुः मृता तत् स्थलम् इत्यादिकं चित्रयित्वा सेवककृतं दण्डताडनं, दश कशाताडनं च रेखाभिः सूचितवान्। सर्वे विषयाः चित्रिताः मया इति तृप्तिम् अनुभूतवान् सः।

काष्ठफलकेन सह कृषिकः राजधानीं प्रति प्रस्थितवान्। अरण्यमार्गे आखेटकः कश्चन तं पृष्टवान्– "कुत्र गच्छन् अस्ति भवान्?" इति।

"महाराजसमीपे मम कश्चन व्यवहारः अस्ति। तं व्यवहारम् एतस्मिन् काष्ठफलके निरूपितवान् अस्मि" इति वदन् काष्ठफलकं प्रदर्शितवान् कृषिकः।

"व्यवहारस्य विषयः कः?" इति कुतूहलेन पृष्टवान् आखेटकः।

"किं वदामि मम दौर्भाग्यम्! अनर्घ्यसम्पत्तिभूता एकमात्रधेनुः भूस्वामिना मारिता" इति दीर्घं निःश्वसितवान् कृषिकः।

अनन्तरं आखेटकेन सह उपविश्य चित्रे लिखितानां चित्राणां तात्पर्यं विस्तरेण निवेदितवान् सः।

एतत्सर्वं श्रुत्वा आखेटकः– "साधु! भवता चित्ररूपेण स्वाभिप्रायः सम्यक् निरूपितः। एतत् चित्रफलकं महाराजाय दर्शयतु। महाराजः निश्चयेन न्यायनिर्णयं करिष्यति" इति उक्त्वा ततः निर्गतवान्। सः आखेटकः एव महाराजः इति न ज्ञातवान् कृषिकः।



कृषिकः राजधानीं प्राप्तवान्। निवेदनमात्रेण अन्तः गन्तुम् अनुमतिः प्राप्ता तेन। कृषिकः अन्तः गतवान्।

विशाले आस्थानभवने राजा सिंहासने उपविष्टः आसीत्। तम् उभयतः द्वादश मन्त्रिणः गाम्भीर्येण उपविष्टवन्तः आसन्। राजा इदानीं राजोचितवेषेण अस्ति इत्यतः अरण्ये दृष्टः एषः एव इति न अभिज्ञातं कृषिकेण।

आस्थानमण्डपं प्रविश्य सर्वान् नमस्कृतवान् कृषिकः। "किमर्थम् आगतवान्?" इति पृष्टवान् कश्चन मन्त्री।

कृषिकः स्वेन आनीतं काष्ठफलकं प्रदर्शयन्– "अत्र मया सर्वं विवृतम् अस्ति। एतत् परिशील्य न्यायदानेन अहम् अनुग्रहणीयः" इति विनयेन निवेदितवान्।

सः मन्त्री फलकस्थानां चित्राणां तात्पर्यम् अजानन्– "कीदृशं निरूपणम् एतत्? किमपि न ज्ञायते" इति वदन् अन्यस्मै मन्त्रिणे तत् फलकं दत्तवान्। अन्ये मन्त्रिणः अपि तत् फलकं परिशीलितवन्तः। "सर्वम् अस्पष्टम्", "मूर्खस्य चेष्टा एषा", "मत्यनुगुणं कृत्यम्" इति एकैकः अपि एकैकम् अभिप्रायं प्रकटितवान्।

अन्ते राजा तत् फलकं स्वीकृत्य तत्र स्थितस्य एकैकस्यापि विवरणं क्रमशः पृष्टवान्– "एतत् भवतः कुटीरं वा?" इति।

"आं श्रीमन्!" इति उक्तवान् कृषिकः।

"अत्रैव खलु वृतिः पतिता?" इति पृष्टवान् राजा।



"आं तत्रैव" इति उत्तरं दत्तवान् कृषिकः।

"एतत् चित्रं भवतः धेनुं सङ्केतयति खलु?" "एतत् भूस्वामिनः गृहं खलु?" "एषः भूस्वामिनः सेवकः स्यात् खलु?" "एषा रेखा सेवककृतं दण्डताडनं सङ्केतयति खलु?" "कशाताडनानि दशभिः रेखाभिः सूचितानि वा?" इति एवं बहून् प्रश्नान् पृष्टवान् राजा। सर्वेषाम् अपि प्रश्नानाम् उत्तरम्– "आम्" इति दत्तवान् कृषिकः।

"सेवकस्य ताडनेन धेनुः मृता। भवता परिहारार्थं भूस्वामी प्रार्थितः। भूस्वामी कशाताडनैः अनुगृहीतवान्। एतत्सर्वं काष्टफलके सङ्केतरूपेण लिखित्वा अत्र आगतवान् भवान्। एवं ननु?" इति पृष्टवान् राजा।

"आं, श्रीमन्। भवता सम्यक् एव ज्ञातम्। एते मन्त्रिणः तु किमपि ज्ञातुं न शक्नुवन्ति। सर्वथा मूर्खाः एते। श्रीमन्! मया न्यायः यथा प्राप्येत तथा अनुगृह्णातु कृपया" इति उक्तवान् कृषिकः।

एतत् श्रुत्वा मन्त्रिणः हसितवन्तः।

"भोः, भवान् ग्रामं गच्छतु। अन्याय्यस्य समीकरणार्थं योग्यां व्यवस्थां करिष्यामि अहम्" इति उक्तवान् राजा।

कृषिकः राजानं कृतज्ञतापूर्वकं नमस्कृत्य स्वग्रामं प्रतिगतवान्। तेनैव सह राजाज्ञा अपि गता।

भूस्वामी कृषिकस्य कुटीरम् आगत्य स्वस्य कृत्यस्य निमित्तं क्षमां प्रार्थितवान्। अनन्तरम् उत्तमं गृहं निर्माय कृषिकाय अर्पितवान्। उत्तमजातीयाः सप्त धेनवः अपि तेन दत्ताः। विशाला कृषिभूमिः अपि दत्ता।

एवं, सेवकेन कृतं धेनुमारणं समर्थयन् भूस्वामी कृषिकं कशया यत् ताडितवान् तस्य फलं स्वयम् अनुभूतवान्।

एतस्य प्रकरणस्य समाप्तेः अनन्तरम् अपि कृषिकस्य मनसि काचित् समस्या जागर्ति स्म एव– "बुद्धिमान् राजा किमर्थं वा स्वस्य आस्थाने मूर्खान् मन्त्रिणः पोषयन् अस्ति" इति।






जानकीम् अपहृतवान् रावणः कस्यां दिशि गतः इति दैन्येन पृच्छतः रामस्य दशां दृष्टवतः सुग्रीवस्य नेत्रयोः अपि अश्रूणि आगतानि।

सः रामं सान्त्वयन् उक्तवान्– "रामभद्र! रावणः कुत्र गतः, सः कुत्र निवसति इति अहम् अपि न जानामि। किन्तु एतावता धैर्यच्युतिः मास्तु। रावणः प्रपञ्चे यत्र कुत्रापि वा भवतु नाम। तम् अन्विष्य तं मारयित्वा सीतां भवतः पुरतः स्थापयिष्यामि। भवतः मुखे हासः यथा दृश्येत तथा करिष्यामि। भवतः हृदये कीदृशं दुःखम् अस्ति इति ज्ञातुं शक्नोमि अहम्। भवतः मम च समाना परिस्थितिः। प्रियाविरहजं दुःखं माम् अपि दहति। तथापि अहं स्थैर्येण तिष्ठन् दुःखं सहमानः अस्मि। भवता अपि आत्मनि स्थैर्यं पूरणीयम्" इति।

सुग्रीवस्य सान्त्वनवचनैः किञ्चित् दुःखोपशान्तिं प्राप्य रामः वस्त्रेण अश्रूणि मार्जितवान्। अनन्तरं सुग्रीवम् उक्तवान् सः– "प्रिय मित्र! भवता योग्यं वचनम् उक्तम्। विपत्तिकाले पण्डितानाम् अपि बुद्धिः मलिनीभवति। भवान् मयि कर्तव्यप्रज्ञां जागरितवान्। आवयोः समानं दुःखम् इत्यतः परस्परसाहाय्येन इदानीं कार्यं साधनीयम् अस्ति। सीतायाः अन्वेषणे भवान् यथाशक्ति प्रयत्नं करोतु। भवान् राज्यं पत्नीं च यथा प्रतिप्राप्नुयात् तथा करिष्यामि अहम्। वालिनं यमसदनं प्रेषयिष्यामि। मम धनुषः निर्गतः बाणः, मम मुखात् निर्गता वाणी च कदापि अन्यथा भवितुं न अर्हति। अतः

## ४. वालिसुग्रीवयोः युद्धम्।



वालिविषयिणीं भीतिं विस्मृत्य भवान् निरातङ्कं तिष्ठतु" इति। रामस्य वचनस्य श्रवणेन सुग्रीवः तस्य मन्त्रिणः च नितरां सन्तुष्टाः।

सुग्रीवः रामं पुनः उक्तवान्– "मित्र! भवतः सामर्थ्ये मम विश्वासः अस्ति। किन्तु वालिनः प्रतापं कोपं च प्रत्यक्षं जानामि खलु अहम्। अतः मम महती भीतिः। तस्य कोपः नितराम् उग्रः। केनापि उपायेन मां मारयितुं सः प्रयतमानः अस्ति। मम मारणार्थं बहवः वानरवीराः तेन नियोजिताः आसन्। किन्तु अद्यपर्यन्तं मया सर्वे अपायाः दूरीकृताः। हनुमदादयः विश्वासार्हाः मन्त्रिणः मया सह सन्ति इति तु मम सौभाग्यम्। तेऽपि मम रक्षणे सदा जागरूकाः। किन्तु उपरि लम्बमानस्य खड्गस्य अधः कियत्कालं वा निश्चिन्ततया स्थातुं शक्येत? सद्यः तु एषः पर्वतः मम आश्रयः अस्ति। किन्तु अग्रे कथम् इत्येव मम चिन्ता" इति।

"सुग्रीव! वाली लोके तावत् जीवति, यावत् सः मम दृष्टिपथं न आगच्छति। तस्य अन्तिमः क्षणः सन्निहितः इति भावयतु। मम एकः सामान्यः बाणः तस्य मारणार्थम् अलम्। अतः एतद्विषये अधिकं दुःखं मास्तु भवतः" इति उक्तवान् रामः।

तदा सुग्रीवः वालिनः बलातिशयं वर्णयन् उक्तवान्– "राम! भवतः सामर्थ्यम् अधिकं स्यात् नाम। तथापि वालिहननं तावत् सुकरं न, यथा वयं चिन्तयामः। वाली सूर्योदयात् पूर्वं चतुर्षु सागरेषु स्नानं करोति। पर्वतशिखरप्रदेशान् गत्वा महाशिलाः उन्नीय उत्क्षिप्य गृह्णाति सः। महतः वृक्षान् उन्मूल्य स्वशक्तेः परीक्षणं करोति सः। अजेयं शतगजबलयुतं दुन्दुभिराक्षसम् एव लीलया मारितवान् अस्ति वाली।

दुन्दुभिः पराक्रमेण अद्वितीयः आसीत्। अत एव मदः अपि अतुलः। महिषरूपः सः कदाचित् समुद्रराजसमीपं गत्वा तं बाहुयुद्धार्थम् आहूतवान्।

तदा समुद्रः– "भोः, भवता सह युद्धं कर्तुं मम सामर्थ्यं नास्ति। हिमवान् पराक्रमशाली। अतः तं युद्धार्थम् आह्वयतु"।

इति उक्तवान्।

'समुद्रराजः स्वस्य असामर्थ्यम् अङ्गीकृतवान्। अतः जयः मम एव इति चिन्तयन् दुन्दुभिः सन्तोषेण हिमालयसमीपं गतवान्। मदोन्मत्तः सन् शृङ्गाभ्यां महाशिलाः उत्पाट्य क्षिप्तवान् च।

एतत् दृष्ट्वा हिमवान् उन्नतस्य पर्वतस्य शिखरे स्थित्वा दुन्दुभिं नाम्ना आहूय उक्तवान्— "भवतः पराक्रमम् अहं जानामि। समबलेन सह युद्धं कर्तुं ममापि उत्साहः अस्ति एव। किन्तु अत्र बहवः मुनयः तपः आचरन्तः सन्ति। आज्ञामात्रेण तान् इतः प्रेषयितुम् अहं न इच्छामि। एकैकस्य दर्शने विषयनिवेदने, इतः प्रेषणे च महान् विलम्बः स्यात्। अनन्तरकाले चेत् आवयोः युद्धं भवितुम् अर्हति" इति।

तदा दुन्दुभिः अट्टहासं कुर्वन्— "अये भीरो, युद्धं कर्तुम् अनिच्छन् व्याजं कथयन् अस्ति। अस्तु तावत्। भवान् पर्वतराजः। समग्रे प्रपञ्जे पर्वताः सन्ति। अतः प्रपञ्चज्ञानं विशेषतः अस्ति भवतः। पराक्रमेण मत्समानः अन्यः कः अस्ति लोके इति वदतु तावत्। युद्धार्थं मम बाहू निरन्तरं स्फुरतः" इति उक्तवान्।

तदा हिमवान् उक्तवान्— "किष्किन्धायां वाली नाम वीरः अस्ति। सः भवता सह युद्धं कर्तुं किं, भवन्तं मारयितुम् एव समर्थः। अतः तस्य समीपं गच्छतु। पराजयं मरणं वा



प्राप्नोतु" इति।

वालिनः पराक्रमस्य श्रवणात् असूयां, कोपम्, उत्साहं च प्राप्य दुन्दुभिः ततः साक्षात् किष्किन्धां गतवान्। नगरद्वारसमीपं गत्वा उच्चैः नर्दनं कृतवान्।

तत्रत्यान् उन्नतान् स्थूलान् च वृक्षान् लीलया पातयन्, खुरैः भूमिम् आखनन्, शृङ्गाभ्यां दुर्गद्वारं ताडयन् च महान्तं कोलाहलम् उत्पादितवान् सः।

वालिना एतत्सर्वं श्रुतम्। सः अन्तःपुरस्त्रीभिः सह समागत्य दुन्दुभिम् उक्तवान्— "अये, अहं कः, मम सामर्थ्यं किम् इति भवान् जानाति इति अहं भावयामि। इतोऽपि कानिचन दिनानि



जीवितुम् इच्छति खलु भवान्? तथा चेत् मौनम् इतः प्रतिगच्छतु" इति।

तदा दुन्दुभिः– "अये गेहेनर्दिन्! स्त्रीणां पुरतः अटाटोपं प्रदर्शयितुम् अत्र आगतः भवान्, उत युद्धेच्छया? अथवा श्वः प्रातःकालं यावत् समयः दीयते मया। तदभ्यन्तरे आत्मीयैः सह विहरतु। दातव्यं दत्त्वा, वक्तव्यम् उक्त्वा सर्वेषाम् अनुज्ञां प्राप्नोतु। अन्तिमतया नगरं समग्रं पश्यतु। राज्यस्य उत्तराधिकारिणं निश्चित्य एव मम समीपम् आगच्छतु" इति उपहासपूर्वकम् उक्तवान्।

"अये, वचने शूरः भवान् इति ज्ञातं मया। किन्तु मया सह युद्धं कर्तुम् एतत् सामर्थ्यम् अपर्याप्तम्। युद्धार्थम् अहं सदा सिद्धः। किन्तु मरणार्थं किं भवान् सिद्धः?" इति पृष्टवान् वाली।

"युद्धार्थं यः सिद्धः तिष्ठति सः एवं स्त्रीभिः सह समागत्य तासां पुरतः आत्मनः ख्यापनं न करोति। धैर्यम् अस्ति चेत् अग्रे आगत्य मम प्रहारान् सम्मुखीकरोतु। अन्यथा पराजयम् अङ्गीकृत्य अन्तःपुरं गत्वा रमणीभिः सह रममाणः तिष्ठतु" इति उक्तवान् दुन्दुभिः।

तदा वाली क्रुद्धः सन् स्त्रीः अन्तःपुरं प्रति प्रेषयित्वा देवेन्द्रेण दत्तां काञ्चनमालां धृत्वा आगत्य दुन्दुभेः कर्णौ गृहीत्वा उन्नीय परिभ्राम्य भूमौ पातितवान्। दुन्दुभेः मुखात् कर्णाभ्यां च रक्तम् आगतम्।

अनन्तरं दीर्घकालं यावत् वालि-दुन्दुभ्योः युद्धं प्रवृत्तम्। काले गते, दुन्दुभेः बलं क्षीणं जातम्। एतत् दृष्टवतः वालिनः उत्साहः प्रवृद्धः। सः दुन्दुभिम् उन्नीय बलात् भूमौ पातितवान्। दुन्दुभिः रक्तं वमन् गतप्राणः अभवत्।

एतावता अपि वालिनः आवेशः न शान्तः। सः दुन्दुभेः कलेवरं परिभ्राम्य त्रियोजनदूरे क्षिप्तवान्। एवं क्षेपणसमये दुन्दुभेः मुखात् निःसृताः रक्तबिन्दवः मतङ्गमुनेः आश्रमस्य उपरि पतिताः।

आश्रमप्रदेशे पतितान् रक्तबिन्दून् दृष्ट्वा कुपितः मतङ्गमुनिः– "एतस्य अनर्थस्य यः कारणं सः यदि आश्रमात् त्रियोजनाभ्यन्तरे

परिसरे पदं स्थापयेत् तर्हि रक्तवमनपूर्वकं मरणं प्राप्नुयात्'' इति शापं दत्तवान्। अनर्थस्य कारणं वाली इति जानन् सः वालिभृत्यान् तस्मात् वनप्रदेशात् बहिष्कृतवान्।

'एकदिनाभ्यन्तरे वालिभृत्याः यदि इतः न निर्गच्छेयुः तर्हि ते शिलारूपं प्राप्नुयुः' इति उक्तवान् सः। अतः भीताः वालिभृत्याः ततः निर्गत्य किष्किन्धां गत्वा वालिनं दृष्ट्वा मतङ्गमुनेः कोपं शापं च विस्तरेण निवेदितवन्तः।

वाली मतङ्गमुनेः पादौ गृहीत्वा 'शापम् उपसंहरतु कृपया' इति बहुधा प्रार्थितवान्। किन्तु मुनिः शापं न उपसंहृतवान्। तदारभ्य वाली एतम् ऋष्यमूकपर्वतं कटाक्षेण अपि न पश्यति।

वालिने दत्तः मतङ्गमुनेः शापः मम अनुग्रहाय अभवत्। इदानीम् अहम् अत्र मन्त्रिभिः सह स्थातुं शक्तवान्। पञ्जरबद्धस्य सिंहस्य गतिः जाता अस्ति मम'' इति।

अनन्तरं सुग्रीवः दुन्दुभेः कलेवरस्य समीपं रामं नीतवान्। तत्रैव समीपे सप्त सालवृक्षाः आसन्। तान् वृक्षान् प्रदर्शयन् रामम् उक्तवान् सुग्रीवः– ''पश्यतु एतान् महावृक्षान्। एतेषु एकैकम् अपि एकैकेन बाणेन च्छेत्तुम् अर्हति वाली। तादृशं पराक्रमशालिनं मारयितुम् अर्हति वा




भवान्?'' इति।

एतत् श्रुत्वा लक्ष्मणः पृष्टवान्– ''मम अग्रजेन किं कृतं चेत् एतस्य वालिहननसामर्थ्यम् अस्ति इति भवान् विश्वस्यात्?'' इति।

''रामः अपि एकेन बाणेन तालवृक्षस्य च्छेदनं यदि कुर्यात्, यदि वा बाणप्रयोगेण दुन्दुभेः कलेवरं शतयोजनदूरं प्रापयेत्, तर्हि अहं रामस्य वालिहननसामर्थ्ये विश्वासं प्राप्नोमि'' इति लक्ष्मणम् उक्तवान् सुग्रीवः।

अनन्तरं सः रामं पश्यन् उक्तवान्– ''राम, वाली महाबलशाली। अद्यावधि तेन अपजयः कुत्रापि न प्राप्तः। भवतः सामर्थ्यं मया श्रुतम्। न प्रत्यक्षं दृष्टम्। अपूर्वाः विषयाः प्रत्यक्षं दृष्टाः चेदेव तेषु विश्वासः



उत्पद्यते, न श्रवणमात्रेण। अन्यच्च वालितः भीतं मम मनः सद्यः कुत्रापि विश्वासं न प्राप्नोति'' इति।

तदा रामः मन्दहासं प्रकटयन्– ''मम पराक्रमं प्रदर्शयामि इदानीम्। एतेन कालान्तरे अपि लाभः स्यात्'' इति वदन् पादाङ्गुष्ठेन दुन्दुभेः कलेवरम् उन्नीय दशयोजनदूरे पातितवान्।

एतत् दृष्ट्वा सुग्रीवः उक्तवान्– ''राम, इदानीम् एतत् कलेवरं शुष्कं जातम् अस्ति। दुन्दुभिना सह युद्धे नितरां श्रान्तः वाली कलेवरम् एतावद्दूरं क्षिप्तवान् अस्ति। अतः भवतः सामर्थ्यं वालिनः सामर्थ्यम् अतिशेते इति वक्तुं न शक्यते। यदि एकेन बाणप्रहारेण सालवृक्षस्य च्छेदनं भवान् कुर्यात् तर्हि अहं विश्वासं प्राप्नुयाम्'' इति।

एतत् अङ्गीकुर्वन् रामः धनुषि बाणं नियोज्य सालवृक्षं लक्ष्यीकृत्य प्रयुक्तवान्। स च बाणः सप्त सालवृक्षान् अपि भित्त्वा भूमेः अन्तः गतः कुत्रापि अदृश्यः अभवत्। एतत् दृष्ट्वा सुग्रीवः अत्याश्चर्यम् अनुभवन् रामं साष्टाङ्गं नमस्कृत्य– ''राम, भवतः सामर्थ्यम् अपूर्वम्। वालिहननसामर्थ्यं भवतः अस्ति इत्यत्र मम किञ्चिदपि सन्देहः नास्ति इदानीम्। अस्थाने मया सन्देहः प्राप्तः यत् तदर्थं क्षन्तव्यः अहम्। भवतः स्नेहं प्राप्य अहम् आत्मानं धन्यं भावयामि'' इति उक्तवान्।

रामः सुग्रीवं गाढम् आलिङ्ग्य– ''सुग्रीव, वयम् इदानीं किष्किन्धां गच्छाम। भवान् अग्रे गत्वा वालिनं युद्धार्थम् आह्वयतु'' इति उक्तवान्।

सुग्रीवः अनुचरैः सह निर्गतवान्। रामलक्ष्मणादयः किष्किन्धासमीपे वृक्षाणां मध्ये निलीय स्थितवन्तः।

सुग्रीवः दुर्गसमीपं गत्वा उच्चैः सिंहनादं कृतवान्। अनुजस्य युद्धाह्वानं श्रुत्वा वाली कोपेन दुर्गात् बहिः आगतवान्। वालिसुग्रीवयोः युद्धम् आरब्धम्। उभौ अपि परस्परं मुष्ट्या ताडयतः। परस्परं नोदयतः, परस्परं पातयतः च।

वालिसुग्रीवयोः उभयोः अपि आकारादिकं समानम् आसीत् इत्यतः रामः वालिनम्

अभिज्ञातु न शक्तवान्। अतः सः बाणप्रयोगं न कृतवान्। अल्पे एव काले सुग्रीवः पराजयं प्राप्य ततः पलायितवान्।

वाली सुग्रीवस्य अनुधावनं कुर्वन् मतङ्गाश्रमपर्यन्तम् अपि आगत्य– "अये भीरो, पुनः किञ्चित्कालं जीवतु" इति उक्त्वा किष्किन्धां प्रतिगतवान्।

रामः लक्ष्मणेन सह सुग्रीवसमीपम् आगतवान्। सुग्रीवस्य समग्रे शरीरे व्रणाः। रक्तं धाराकारेण स्रवति। सः अवमानभारेण शिरः अवनमय्य दैन्येन रामम् उक्तवान्– "मित्र! भवतः पराक्रमः प्रत्यक्षं दृष्टः मया। तथापि भवान् अद्य किमर्थम् एवं कृतवान्? मां युद्धार्थं प्रेरयन् भवान् वालिनः मारणात् विमुखः जातः। मया तु प्राणापायः सम्मुखीकृतः। वालिनः संहारः न शक्यः इति यदि भवान् अवदिष्यत् तर्हि अहं युद्धं न अकरिष्यम् एव" इति।

"सुग्रीव! मया दोषः कृतः। अहं तत् अङ्गीकरोमि। किन्तु मम ताटस्थ्यस्य कारणम् अस्ति। भवतः वालिनः च आकारः, अलङ्कारः, गमनं, कण्ठस्वरः इत्यादयः समानाः आसन्। अतः भवतोः भेदः मया न ज्ञातः एव। भ्रमवशात् भवतः एव संहारः यदि मया कृतः स्यात् तर्हि महत् पापं सञ्चितं भवेत् खलु? अभयदाता अहं केनापि कारणेन वचनभङ्गं कर्तुं न अर्हामि। अतः अहं बाणप्रयोगं न कृतवान्। श्वः भवान् पुनरपि वालिनं युद्धार्थम् आह्वयतु। भवतः अभिज्ञानम् अहं प्राप्तुं यथा शक्नुयां तथा मालां काञ्चित् धरतु। तदा अहं विनायासं वालिनं मारयितुं शक्नोमि। लक्ष्मण, तत्र दृश्यमानानि गजपुष्पाणि कानिचन आनीय मालां कृत्वा सुग्रीवस्य कण्ठे स्थापयतु" इति उक्तवान् श्रीरामः।

रामस्य वचनं श्रुतवति सुग्रीवे नवोत्साहः उत्पन्नः। सः रामं विनयेन नमस्कृत्य लक्ष्मणेन धारितां गजपुष्पमालां धृत्वा पुनरपि नवोत्साहेन किष्किन्धाम् उद्दिश्य प्रस्थितवान्।





# विद्याभिलाषी

वत्सलः नाम शिष्यः पूर्वं सुबोधनामकस्य गुरोः आश्रमे अध्ययनं कुर्वन् आसीत्। तस्य विद्याभ्यासः यद्यपि समाप्तः, तथापि सः गुरोः सेवां कुर्वन् आश्रमे एव स्थातुम् इच्छति। वत्सलस्य व्यवहारेण बुद्धिमत्तया च सुबोधः सन्तुष्टः आसीत्। अतः सः शिष्यस्य प्रार्थनाम् अङ्गीकुर्वन् तम् आश्रमे एव स्थापितवान्। दशानां शिष्याणां पाठने तं नियोजितवान् च।

गुरोः प्रशंसा प्राप्तव्या इति वत्सलस्य प्रबला इच्छा। अतः सः शिष्यान् श्रद्धया पाठयन् अल्पे एव काले तान् स्वसमानान् कृतवान्।

आश्रमे स्थितानाम् अन्येषां शिष्याणां पाठनं तु मन्दया गत्या प्रचलति स्म। अतः कदाचित् ते सर्वे सम्भूय गत्वा गुरुं सुबोधं प्रार्थितवन्तः यत् अस्मान् अपि वत्सलाधीनं करोतु इति।

एतत् श्रुत्वा सुबोधः हसन् उक्तवान्– "वत्साः, वत्सलः पाठने निपुणतरः इति न। सः अध्यापनक्षेत्रे नूतनः इत्यतः चतुराः छात्राः तस्मै अर्पिताः आसन्। अतः तदीयाः छात्राः वेगेन विद्यां गृहीतवन्तः। अतः वत्सलः ममापेक्षया अपि समर्थः इति भ्रान्तिः मास्तु भवताम्। मत्तः ये विद्यां प्राप्तवन्तः तेषु कमलः एक एव मत्तः अपि श्रेष्ठः भवितुम् अर्हति। स च इदानीं विद्यासागरस्य आस्थाने अस्ति" इति।

सुबोधेन यत् उक्तं तत् अन्यशिष्याणां द्वारा वत्सलेन अपि श्रुतम्। एतेन सः खिन्नः सन् गुरोः समीपं गत्वा उक्तवान्– "आचार्य! शिष्यस्य गुणान् दृष्ट्वा गुरुणा सन्तोषः प्राप्तव्यः, न तु ईर्ष्या। भवान् मम गुरुः। पाठनकौशलं यदि मयि विशेषतः स्यात् तर्हि तत् भवता एव दत्तम्। शिष्यान् यदि अहं

सम्यक् पाठयामि तर्हि मया प्रशंसा प्राप्येत इति मम आशयः आसीत्। भवान् तु असूयया व्यवहृतवान्'' इति।

एतत् श्रुत्वा मन्दहासपूर्वकम् उक्तवान् सुबोधः– ''वत्स, पूर्वं कमलः यदा मम शिष्यः आसीत् तदा अपि एवम् एव प्रवृत्तम्। तदा कमलः भवान् इव मां न निन्दितवान्। सः मां निवेदितवान् यत् मम दोषाः के इति ज्ञापयतु, येन अहं भवतः समानः भवेयम् इति। भवतः श्रेष्ठतायाः निर्णायकः न भवान्, अपि तु अहम्। भवान् गर्वेण व्यवहरन् माम् ईर्ष्यायुक्तम् उक्तवान्। गर्वः अज्ञानस्य लक्षणम्। यः ज्ञानी स एव गुरुसमानः भवितुम् अर्हति'' इति।

एतत् श्रुत्वा वत्सलः गुरुं साष्टाङ्गं नत्वा गद्गदस्वरेण उक्तवान्– ''गुरुदेव! अज्ञानी अहं क्षन्तव्यः भवता। इतः परम् एवं न व्यवहरिष्यामि। भवच्छिष्येषु अहम् एव श्रेष्ठः स्याम् इति मम अपेक्षा। एतदर्थं मया किं करणीयम्? भवता यथा उक्तं तथा श्रद्धया करिष्यामि अहम्'' इति।

सुबोधः वत्सलम् उत्थापयन् उक्तवान्– ''पुत्र! भवता अक्षम्यः अपराधः कोऽपि न कृतः। गर्वेण किञ्चित् अनौचित्येन व्यवहृतवान्, तावदेव। परिश्रमेण श्रेष्ठत्वं प्राप्तव्यम् इति इच्छा उत्तमेषु एव भवति। मम प्रियशिष्यस्य कमलस्य अपि एतादृशी एव इच्छा भवति स्म। तदा अहं तं मुक्तपुरस्थानां विभिन्नोद्योगेन जीवतां शिक्षणार्थं प्रेषितवान् आसम्। एतदर्थं



षण्मासात्मकः अवधिः दत्तः आसीत् च। षण्मासान् यावत् तैः सह स्थातव्यम् इत्यपि नियमः कृतः आसीत् मया। किन्तु कमलः एतस्मिन् कार्ये असफलः सन् प्रत्यागतः। यदि भवान् एतत् साधयितुं शक्नुयात् तर्हि कमलापेक्षया श्रेष्ठः भवेत्'' इति।

एतत् श्रुत्वा वत्सलः उत्साहितः जातः। सः पूर्णं विवरणं प्राप्य तस्मिन् एव दिने मुक्तपुरं प्रति गतवान्।

मुक्तपुरे सुतीक्ष्णः नाम कश्चन क्षौरिकः निवसति स्म। सः क्षौरवृत्त्या अङ्गमर्दनवृत्त्या च जीवति स्म। स्ववृत्तौ तस्य अद्वितीयं नैपुण्यम्। अतः सदा सः कार्यव्यग्रः भवति स्म। वृत्त्या प्रभूतं धनं सम्पाद्य सः एकम् उत्तमं गृहं निर्मितवान् अस्ति। तथापि वृत्तिं कुर्वन् एव अस्ति सः।

मुक्तपुरग्रामे धावकः नाम रजकः, समर्थः नाम तन्तुवायश्चापि आस्ताम्। तौ अपि स्ववृत्तौ अद्वितीयौ, तया वृत्त्या प्रभूतं धनं सम्पाद्य उत्तमं गृहं निर्मितवन्तौ आस्तां च। किन्तु एते त्रयः अपि अनक्षरज्ञाः।

गुरोः आदेशस्य अनुसारम् एतेषां त्रयाणां शिक्षणार्थं वत्सलः मुक्तपुरं गतवान्। तत्र सः क्षौरिकस्य सुतीक्ष्णस्य गृहं प्राप्तवान्। सुतीक्ष्णस्य गृहं सम्पत्तिं च दृष्टवतः वत्सलस्य परमाश्चर्यम्!

वत्सलस्य आगमनस्य कारणं ज्ञात्वा सुतीक्ष्णः उक्तवान्– ''महोदय! वृत्तिः एव मम देवता। अन्यच्च पठनार्थं मम समयः उत्साहः वा सर्वथा नास्ति। हरिकथा-





पुराणादिभिः ज्ञानं प्राप्यते। नाटक-यक्षगानादीनां दर्शनतः मनोरञ्जनं प्राप्यते। एतावता एव मम तृप्तिः। इदानीम् अक्षरज्ञानेन अध्ययनेन वा मम न किमपि प्रयोजनम्'' इति।

''विद्याविहीनः पशुः इति भवता श्रुतं खलु? सुखजीवनार्थं यावत् आवश्यकं तावत् एतावता एव सम्पादितम् अस्ति भवता। अतः वृत्तिं परित्यज्य विद्याभ्यासं करोतु। अहं भवन्तं पण्डितं करिष्यामि'' इति उक्तवान् वत्सलः।

तदा हसन् उक्तवान् सुतीक्ष्णः– ''पशुत्वस्य मानवत्वस्य वा निर्णायकं तत्तस्य व्यवहारः, न तु विद्या। अन्यच्च धनं सम्पत्तिः न, वृत्तिः एव सम्पत्तिः। मम जीवितावधौ एतस्यां वृत्तौ मत्तः अपि श्रेष्ठम् अन्यं द्रष्टुं न इच्छामि अहम्। अतः यावत् मम शरीरे शक्तिः भवति तावत् एतां वृत्तिं न त्यजामि अहम्'' इति।

रजकः धावकः, तन्तुवायः समर्थश्चापि एतादृशम् एव उत्तरम् उक्तवन्तौ। वत्सलः ज्ञातवान् यत् एतेषां त्रयाणाम् अपि स्ववृत्तौ विशेषव्यामोहः इति। तथापि वत्सलः निराशः न जातः। तेषां मनस्सु विद्यायाम् आदरम् उत्पादयितुं निरन्तरं प्रयत्नं कुर्वन् स्थितवान्। एतावता एव षट् मासाः अतीताः।

वत्सलः निराशया गुरुकुलं प्रत्यागतवान्। महता खेदेन स्वकीयम् असाफल्यं गुरुं निवेदितवान् च।

वत्सलस्य कथनं श्रुत्वा गुरुः सुबोधः हसन् उक्तवान्– ''स्वास्थ्यप्राप्त्यर्थं व्यायामः आवश्यकः। किन्तु ये शारीरकश्रमेण जीवन्ति ते व्यायामविषये आदरवन्तः न भवन्ति। यतः ते स्वकार्येण एव अपेक्षितं व्यायामं प्राप्नुवन्ति। अतः तदर्थं पृथक् परिश्रमः करणीयः नास्ति इति भावयन्ति ते। एवम् एव यः स्ववृत्तौ सफलः सः विद्याभ्यासविषये आदरवान् न भवति। लोके बहूनां चिन्तनम् एवम् अस्ति यत् विद्या उदरपोषणार्थम् इति। यदि भवान् अपि क्षौरिक-रजक-तन्तुवायवत् कस्याञ्चित् वृत्तौ स्थिरः स्यात् तर्हि विद्याविषये

विशेषादरं प्रकटितवान् न स्यात्। ज्ञानार्थं विद्या इति भवतः विचारः नास्ति। जीवनावश्यकता-पूरणार्थं विद्या इत्येव भवतः चिन्तनम्। किन्तु कमलः 'ज्ञानार्थं विद्या' इति दृढं विश्वसिति स्म। अतः कमलः भवत्तः अपि श्रेष्ठः" इति।

"गुरुदेव! क्षौरिकस्य रजकस्य तन्तुवायस्य च पाठने कमलेन अपि असाफल्यं प्राप्तम्। तथापि भवन् कमलं मत्तः श्रेष्ठं निर्णीतवान्। एतत् कथम्?" इति पृष्टवान् वत्सलः।

"भवान् तान् त्रीन् पाठयितुं मुक्तपुरं गतः, तत्रैव षट् मासान् यावत् स्थितवान्। दायित्वं निर्वोढुम् अशक्तः सन् प्रत्यागतवान् च। वास्तविकतया विद्याभिलाषिणः किं कुर्वन्ति इति भवान् जानाति वा?" इति पृष्टवान् सुबोधः।

वत्सलः किम् उत्तरं वक्तव्यम् इति अजानन् शिरः अवनमय्य स्थितवान्। तदा सुबोधः गाम्भीर्येण उक्तवान्– "एतादृशे सन्दर्भे कमलेन किं कृतम् इति जानाति वा भवान्? सः षण्मासाभ्यन्तरे तेषां त्रयाणाम् अपि वृत्तिम् अभ्यसितुं प्रयत्नं कृतवान्" इति।

"क्षौरादिवृत्तिषु प्रावीण्यं प्राप्तव्यम् इति का आवश्यकता आसीत् पण्डितस्य कमलस्य?" इति आश्चर्येण पृष्टवान् वत्सलः।

"अत्रैव भवतः चिन्तने दोषः दृश्यते। भवान् अध्ययने प्रवर्तनात् पूर्वम् आवश्यकतां पश्यति। कमलस्तु प्रयोजनं किमपि न पश्यति। अतः सर्वविधविद्यासु अपि प्रयोजनचिन्तनं विना सः प्रवर्तते। मुक्तपुरे षट् मासान् तिष्ठन् सः समयं व्यर्थं न कृतवान्। सः वयनादीः त्रिविधविद्याः ज्ञात्वा आगतवान्" इति उक्तवान् सुबोधः।

इदानीं वत्सलः ज्ञातवान् यत् गुरुः कमल विद्याप्रेमिणं किमर्थं वदति इति। 'मया अपि प्रयोजनचिन्तनं परित्यज्य विद्या अभ्यसनीया' इति सङ्कल्पं कृतवान् सः।





# राज्याः कुसीदवाणिज्यम्

पर्शियादेशे पूर्वं सैयदब्दुल्लनामकः कश्चन राजा आसीत्। मनोरञ्जनकार्यक्रमेषु तस्य विशेषासक्तिः। यस्मिन् वर्षे सिंहासनम् आरूढं तस्मिन् वर्षे तेन मनोरञ्जनकार्यक्रमार्थं द्विलक्षं दीनाराः व्ययीकृताः। 'प्रतिवर्षं यदि एवम् एव व्ययः क्रियेत तर्हि शासननिर्वहणार्थं धनागारे धनं न भवेत्' इति विनयेन सूचितवान् मन्त्री।

अनन्तरं महाराजः मन्त्री च व्ययनिर्वहणविषये बहुधा चिन्तनं कृतवन्तौ। अन्ते ताभ्यां निश्चितम्– 'देशे कुसीदवाणिज्यं शासनेन अनुमन्तव्यम्। कुसीदवणिग्भ्यः विशेषकरः सङ्ग्रहणीयः। एतस्याः व्यवस्थायाः कारणतः, ये ऋणम् इच्छन्ति ते ऋणरूपेण धनं प्राप्तुम् अर्हन्ति। कुसीदवणिजः वृद्धिं प्राप्नुवन्ति। धनागारम् अपि पूर्णं भविष्यति' इति।

एषः नूतनः नियमः समग्रे देशे सडिण्डिमघोषं प्रसारितः। एतत् अपि प्रसारितं यत् ये ऋणं स्वीकृत्य समये न प्रत्यर्पयन्ति ते कारागारवासेन दण्ड्यन्ते इति।

एतस्य नूतनस्य नियमस्य आगमनात् धनिकाः नितरां सन्तुष्टाः। ते अधिकं वृद्धिं निश्चित्य ऋणं दातुम् आरब्धवन्तः। यदि कश्चित् वृद्ध्याधिक्यविषये पृच्छेत् तर्हि एते वदन्ति स्म– "अस्माभिः राज्ञे विशेषकरः दातव्यः। व्यवहारनिर्वहणार्थं लिपिकाराः कर्मकराः च नियोक्तव्याः। अस्माकं जीवननिर्वहणम् अपि एतया वृत्त्या एव प्रचलेत्। अतः एतत् अनिवार्यम्" इति।

नूतनस्य नियमस्य कः परिणामः इति ज्ञातव्यम् इति आलोचितवती राज्ञी कदाचित् आप्तां दासीम् आहूय पृष्टवती– "नूतनस्य नियमस्य कीदृशः परिणामः?" इति।

"पर्शियादेशीया जानपदकथा"

तदा दासी उक्तवती– "कुसीदवाणिज्यं तु विशेषतः प्रचलति। धनिकाः निर्धनानां रक्तं पिबन्तः सन्ति। बहवः वृद्धिधनं दातुम् अपि अशक्नुवन्तः कारागारं गच्छन्तः दृश्यन्ते। सर्वत्र अशान्तिः दृश्यते" इति।

एतत् श्रुत्वा राज्ञी चिन्ताग्रस्ता जाता। 'कुसीदवाणिज्यस्य अभिवृद्ध्या प्रजाः लाभान्विताः भवन्ति, एतेन प्रजाहितं सिध्यति, धनागारम् अपि पूर्यते इति राज्ञा यदा उक्तं तदा मया अपि अङ्गीकृतम् आसीत्। किन्तु वस्तुस्थितिः अन्या एव दृश्यते' इति चिन्तितवती सा।



सा महाराजं समग्रं निवेदितवती। तस्याः कथनं निराकुर्वन् उक्तवान् महाराजः– "कुसीदवणिग्भिः या वृद्धिः विधीयते तया वृद्ध्या सहितम् ऋणं प्रत्यर्पयितुं ये समर्थाः, तादृशैः एव ऋणं स्वीकरणीयम्। ऋणं स्वीकृत्य न प्रत्यर्पितं चेत् तादृशाः दण्ड्यन्ते। अत्र नियमे न कोऽपि दोषः" इति।

"तर्हि अहम् अपि कुसीदवाणिज्यं करिष्यामि। मह्यं सहस्रं दीनारान् यच्छतु। अन्यैः इव मया अपि करः दीयते। एतेन धनागारस्य लाभः वर्धते" इति उक्तवती राज्ञी।

महाराजः एतत् सन्तोषेण अङ्गीकृतवान्। राज्ञी कुसीदवाणिज्यस्य आरम्भं कृतवती इति राजोद्योगिभिः सर्वैः ज्ञातम्। रक्षकभटः कश्चित् पञ्चाशत् दीनारान् वृद्धिरूपेण दातुम् अङ्गीकृत्य शतं दीनारान् ऋणरूपेण प्राप्य गतवान्। कश्चन दलपतिः द्विशतं दीनारान् स्वीकृत्य पञ्चाशत् दीनारान् वृद्धिरूपेण ददामि इति अङ्गीकृत्य गतवान्। मन्त्री अपि 'शतदीनाराणां वृद्धिं ददामि इति उक्त्वा पञ्चशतं दीनारान् ऋणरूपेण नीतवान्।

केचन मासाः अतीताः। कदाचित् राजा एकाकी नगरसञ्चारार्थं गतवान्। एवं सञ्चारेण सः मध्याह्नसमये श्रान्तः नितरां बुभुक्षितः च। समीपे एव तेन एकं गृहं दृष्टम्। राजा अश्वात् अवतीर्य तस्य गृहस्य द्वारम् अङ्गुल्या ताडितवान्।

तस्मिन् गृहे कश्चन निर्धनः निवसति स्म।



सः महाराजं दृष्ट्वा आश्चर्यं सन्तोषं च अनुभवन् विनयेन नमस्कृत्य राजानम् आदरेण अन्तः आहूतवान्।

"अहं नितरां बुभुक्षितः अस्मि" इति उक्तवान् राजा।

"भवान् किञ्चित् विश्रान्तिसुखम् अनुभवतु। भोजनव्यवस्थाम् अविलम्बेन करिष्यामि" इति उक्तवान् निर्धनः।

अनन्तरं सः त्वरया प्रतिवेशिनः धनिकस्य सकाशात् पञ्चाशद्दीनारात्मकम् ऋणम् आनीय तेन अत्युत्तमान् भोजनपदार्थान् आनीतवान्। भोजनार्थं सज्जीकृतान् पदार्थान् दृष्ट्वा राजा आश्चर्यचकितः। यतः राजप्रासादे यादृशं भोजनं भवति तादृशम् एव अत्रापि परिविष्टम् आसीत्। एषः निर्धनः एतस्य सज्जीकरणार्थम् ऋणम् आनीतवान् स्यात् इति तर्कितवान् राजा।

ततः प्रत्यागतः राजा तस्य निर्धनस्य दारिद्र्यं स्मरन् मन्त्रिणः हस्ते सहस्रं दीनारान् दत्त्वा, 'एतत् धनं निर्धनाय दत्त्वा आगच्छतु' इति उक्त्वा मन्त्रिणं प्रेषितवान्।

एषा वार्ता राज्ञ्या ज्ञाता। सा मन्त्रिणं स्वसमीपम् आहूय– "भवता स्वीकृतस्य ऋणस्य अवधिः समाप्तः। अतः वृद्धिसहितम् ऋणं प्रत्यर्पयतु" इति उक्तवती। मन्त्री निर्धनाय दातुं राज्ञा दत्ते धने षट्शतं दीनारान् राज्ञ्यै दत्तवान्।

इदानीं तं निर्धनं स्वयं द्रष्टुं लज्जाम् अनुभवति मन्त्री। अतः सः दलपतिम् आहूय तस्य हस्ते चतुश्शतं दीनारान् दत्त्वा 'एतत् निर्धनाय दत्त्वा आगच्छतु' इति उक्तवान्।

एतत् अपि ज्ञातवती राज्ञी। सा दलपतिं स्वसमीपम् आहूय उक्तवती– "मह्यं भवता ये सार्धद्विशतं दीनाराः दातव्याः तान् एतत्क्षणे एव ददातु" इति। दलपतिः राज्ञ्यै सार्धद्विशतं दीनारान् दत्त्वा अवशिष्टं रक्षकभटस्य हस्ते स्थापयन्– 'एतानि निर्धनाय दत्त्वा आगच्छतु' इति सूचितवान्।

राज्ञी रक्षकभटम् अपि आहूय– "मह्यं दातव्यान् सार्धशतं दीनारान् ददातु" इति वदन्ती तस्य हस्ते स्थितान् सार्धशतं दीनारान् वशीकृतवती।

कानिचन दिनानि अतीतानि। कश्चन धनिकः कञ्चन निर्धनं राज्ञः पुरतः आनीय राजानं निवेदितवान्– "प्रभो, एषः मत्तः ऋणं स्वीकृतवान् आसीत्। अवधौ अतीते अपि तत् न प्रत्यर्पितवान्" इति।

"प्रत्यर्पणार्थं सामर्थ्ये असत्यपि भवान् किमर्थम् ऋणं स्वीकृतवान्?" इति निर्धनं पृष्टवान् राजा।

"प्रभो, केभ्यश्चित् दिनेभ्यः पूर्वं भवता मम गृहं प्रति आगतम् आसीत्। तदा भवतः सत्कारार्थं मया एतस्मात् धनिकात् ऋणं स्वीकृतम्। तस्य प्रत्यर्पणं कर्तुम् अहं न शक्तवान्" इति निवेदितवान् निर्धनः।

"मया अनन्तरदिने एव भवते सहस्रं दीनाराः प्रेषिताः खलु? तान् किं कृतवान्?" इति पृष्टवान् राजा।

तदा निर्धनः आश्चर्यं प्रकटयन्– "मया एकः अपि दीनारः न प्राप्तः श्रीमन्" इति निवेदितवान्।

राजा मन्त्रिणः मुखं प्रश्नार्थकदृष्ट्या दृष्टवान्। तदा मन्त्री– "भवता दत्ते धने षट्शतं दीनाराः मया ऋणस्य प्रत्यर्पणार्थम् उपयुक्ताः। चतुश्शतं दीनारान् अहं सेनापतये दत्तवान्" इति निवेदितवान्।

सेनापतिः– "मया सार्धद्विशतं दीनाराः ऋणप्रत्यर्पणार्थम् उपयुक्ताः। अवशिष्टान् रक्षकभटस्य हस्ते दत्तवान्" इति निवेदितवान्। रक्षकभटः तु– "मया



ऋणप्रत्यर्पणार्थं तत् धनम् उपयुक्तम्" इति उक्तवान्। ते त्रयः अपि निवेदितवन्तः यत् वयं महाराज्ञीतः ऋणं प्राप्तवन्तः आस्म इति।

"भवन्तः त्रयः अपि दण्डार्हाः। प्रत्यर्पणसामर्थ्ये असत्यपि ऋणं स्वीकृतम् इति एकः दोषः। शासनसम्बन्धि धनं स्वकार्यार्थम् उपयुक्तम् इति अपरः दोषः। अतः भवन्तः वर्षद्वयं यावत् कारागारवासेन दण्ड्यन्ते" इति उक्तवान् राजा।

अनन्तरं राजा तं निर्धनं पश्यन्– "भोः, प्रत्यर्पणसामर्थ्यरहितः भवान् किमर्थं वा ऋणं स्वीकृतवान्? भवता ऋणं न प्रत्यर्पितं यत् तदर्थं भवन्तं वर्षं यावत् कारागारे स्थापयिष्यामि" इति उक्तवान्।

एतया घटनया राज्ञः मनः व्यथाग्रस्तं

जातम्। रात्रौ अन्तःपुरे सः राज्ञीम् उक्तवान्– "भवत्याः कुसीदवाणिज्येन अलम्" इति।

"किमर्थम्? मम वाणिज्येन भवता का हानिः अनुभूता?" इति पृष्टवती राज्ञी।

"भवत्या यत् ऋणं दत्तं तस्य कारणतः चत्वारः मया अद्य कारागारं प्रति प्रेषिताः। भवत्याः वाणिज्यतः मया शतं दीनाराः प्राप्येरन्। किन्तु कारागारे स्थितानां पोषणार्थं महान् व्ययः करणीयः भविष्यति। एवं च हानिः ममैव। कियती हानिः इति भवती एव गणयित्वा वदतु" इति असमाधानेन उक्तवान् राजा।

राज्ञी सर्वं गणयित्वा उक्तवती– "कारागारे स्थितानां चतुर्णां पोषणार्थं भवता षोडशशतं दीनाराः व्ययीकरणीयाः" इति।

"इदानीं भवत्या एव खलु ज्ञातम्– भवत्या कृतस्य कुसीदवाणिज्यस्य कारणतः कीदृशी हानिः शासनेन वोढव्या अभवत् इति?" इति कोपेन उक्तवान् राजा।

"एवं तर्हि मम एकः प्रश्नः। भवता कुसीदवाणिज्यम् अनुमतं खलु? तेन एतावता कियान् आयः प्राप्तः?" इति पृष्टवती राज्ञी।

"प्रायः लक्षद्वयं दीनाराः" इति उक्तवान् राजा।

"अस्तु, ऋणं न प्रत्यर्पितम् इति कारणतः कति जनाः कारागारे स्थापिताः स्युः?" इति पुनः पृष्टवती राज्ञी।

"प्रायः विंशतिसहस्रं जनाः कारागारे स्युः" इति आलोच्य उक्तवान् राजा।

"अहो दुर्गतिः! एतेषां निमित्तं भवता दशलक्षं दीनाराः व्ययीकरणीयाः भवेयुः। कुसीदवाणिज्यस्य अनुमत्या तु लक्षद्वयं दीनाराः प्राप्यन्ते। एवं च एतादृशात् शासनात् हानिः एव महती" इति उक्तवती राज्ञी।

राजा एतया घटनया विवेकं प्राप्य कुसीदवाणिज्यं शासनेन निषेधितवान्। मनोरञ्जनकार्यक्रमार्थं क्रियमाणं व्ययम् अपि न्यूनीकृतवान् सः।





सहरामरुभूमौ स्थितस्य टिस्सिलीप्रदेशस्य भूमिः पूर्वं सारयुक्ता आसीत्। तत्र बहवः वसन्ति स्म अपि। क्रि.पू. २००० तः आरभ्य स च प्रदेशः क्रमशः मरुभूमिरूपेण परिवृत्तः।

## मरुभूमिः

## 'बीवर्'जन्तोः पुच्छम्



जले स्थले च वासं कर्तुं समर्थस्य बीवर्जन्तोः विस्तृतं दीर्घं च पुच्छं भवति। जले तरणसमये एतत् अरित्रायते। यदा एषः पुच्छेन जलं वेगेन ताडयति तदा उत्पद्यमानः शब्दः सुदूरं श्रूयते। एवं आत्मरक्षणार्थम् अपि पुच्छस्य उपयोगः क्रियते तेन जन्तुना।



## अत्यधिकभारयुक्तः कीटः

भूमध्यरेखाप्रदेशे आफ्रिकादेशे दृश्यमानः कश्चन कीटविशेषः एव (गोलियेत् बीटिल्) अत्यधिकभारयुक्तः कीटः। प्रवृद्धस्य एतस्य कीटस्य भारः १०० ग्रां भवेत्। दैर्घ्यं च ११० मि.मी. स्यात्।

# जलाभावः

| | |
|---|---|
| पतिः - अये, अद्य पत्रिका पठिता वा? | I say, did you read today's paper? |
| पत्नी - पत्रिकायां कः विशेषः? | What is special about it? |
| पतिः - परश्वः जलं न आगमिष्यति। | There will be no water day after tomorrow! |
| पत्नी - किं निमित्तम्? | What is the matter? |
| पतिः - तान्त्रिकं समीकरणम् अस्ति इत्यतः। | Maintenance work! |
| पत्नी - ह्यः अपि अस्माकं प्रदेशे जलं न आगतम्। | Even yesterday we didn't get water! |
| पतिः - अनधिकृतं जलस्थगनं स्यात् एतत्। | It was probably an unscheduled cut. |
| पत्नी - एकस्मिन् दिने अधिकृतजलाभावः। अपरस्मिन् दिने अनधिकृतजलाभावः। एवं च जलाभावसमस्या तु सर्वदा बाधते एव। | Scheduled cut on one day, unscheduled cuts on other days! The trouble is never ending. |
| पतिः - अत एव नूतना काचित् योजना आरब्धा अस्ति। द्वित्रेषु वर्षेषु सा समाप्ता भवेत्। तदा जलसमस्यायाः परिहारः भवेत्। | That is why a new project has been taken up. It will be completed in two or three years. There will be no water problem then. |
| पत्नी - तदानीम् अपि अन्यविधा समस्या भवेत् एव। नगरवासः जलभावसमस्या – एतयोः अविनाभावसम्बन्धः। | There will be some other problem then. City life and water scarcity always go together. |
| पतिः - जलाभावस्य तान्त्रिकं कारणं चेत् सोढुं शक्यः। किन्तु कर्मकराणाम् औदासीन्यं कारणं चेत् ....। | If it is a technical problem, we can understand. But if it is negligence on the part of workers ...... |
| पत्नी - किं वा कर्तुं शक्यते, ऋते सहनात्? जलस्य उपयोक्तारः असङ्घटिताः। अतः किमपि कर्तुं न शक्यते। | What else can you do other than put up with it? Consumers are not organized. So they cannot do anything. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जनवरी-९१ मासे प्रकटयिष्यामः।**





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **नीरसे रसधरे रसान्वेषणं स्याद् वा लाभाय?**

द्वितीयचित्रम् - **सरसे सरोवरे स्वैरविहारः स्यादेव मोदाय।**

प्रेषकः - श्री गोपालकृष्णन्, प्राच्यप्रौढशाला, पश्चिममुख्यमार्गः, तञ्जावूरु-६१३००९




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अक्षम्यः - | Inexcusable |
| अक्षरज्ञः - | Illiterate |
| अरित्रम् - | Helm of a ship |
| आखेटकः - | Hunter |
| आयः - | Income |
| आवश्यकता - | Necessity |
| इक्षुः - | Sugarcane |
| कार्यव्यग्रः - | Engaged in work |
| कुसीदवाणिज्यम् - | Money-lending |
| कृष्णाङ्गारम् - | Charcoal |
| कोषः - | Pocket |
| क्षौरिकः - | Barber |
| खण्डितवान् - | Repudiated |
| गेहेनर्दी - | Defiant at home |
| घृणा - | Contempt |
| तन्तुः - | Thread |
| तन्तुवायः - | Weaver |
| दशा - | Circumstance |
| नर्दनम् - | Bellowing |
| निर्वाचितः - | Elected |
| पाषाणः - | Stone |
| बृंहणम् - | Trumpeting of an elephant |
| भल्लूकः - | Bear |
| युतकम् - | Shirt |
| रजकः - | Washerman |
| लङ्घनम् - | Fast (N) |
| वयनम् - | Weaving |
| वृतिः - | Fence |
| व्यजनम् - | Fan |
| शशः - | Rabbit |
| शारीरकम् - | Pertaining to the body |
| शृङ्गम् - | Mountain peak |
| श्वश्रूः - | Mother-in-law |
| सज्जम् - | Ready |
| सर्वकारः - | Government |
| सालवृक्षः - | Sal tree |
| सूचिका - | Needle |
| स्नुषा - | Daughter-in-law |
| स्वगतम् - | Talking to oneself |
| हठात् - | Suddenly |

* * * *

# Ta dum, They is here

**Oops!
Kiddy grammar
sure is catchy—Ya,
they are here.**

Bow Wow 'n' Floppy the doggies (wuff! wuff!), Jumbo the elephant, Wobbit the rabbit, Teddy 'n' Sporty your bear buddies, the mouse of your house—Squeeks, not to mention Flipper the dolphin 'n' Bunny with the Twins. They are all part of the CUDDLES family. And hang on—there's more to come.



What stuffing to use, what shape to give, which colour to use...... We've spent long months in designing and crafting the toys which can take on the toughest torture test ever—childhandling. To ensure that they're safe.

The one thing we didn't do while making our toys was fool around. We left that entirely for your kid to do. Come, check us out.

**CUDDLES**

CHANDAMAMA TOYTRONIX

In collaboration with Sammo Corporation, S Korea

Chandamama Buildings, 188, NSK Salai,
Vadapalani, Madras-600 026.

